॥ श्रीगणेशाय नमः ॥

ॐ

गुरुमण्डल ग्रन्थमालायाः दशमम्पुष्पम्

# निरुक्तम्

## ( नैगमं काण्डम् )

—※(०)※—

श्रीमन्महर्षियास्काचार्य्य प्रणीतम्

जम्बूमार्गाश्रमवासि—भगवद् दुर्गाचार्य विरचितया

ऋज्वर्थाख्य टीकया सहितम्

तृतीयो भागः

५, क्लाइव रो,

कलकत्ता

| वैक्रमाब्दः | प्रथमं संस्करणम् | खैस्ताब्दः |
| --- | --- | --- |
| २००६ | ५००० | १९५२ |

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

Gurumandal Series No X.

# NIRUKTAM

## ( *Naigamam Kandam* )

BY

**Maharshi Yaskacharya**

WITH A

COMMENTARY BY

**Bhagwat Durgacharya**

**Volume III**

FIRST EDITION 5000

5, Clive Row,
Calcutta.

Vikram Era. 2009

Christian Era. 1952

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

॥ श्रीगणेशाय नमः ॥

# अथ निरुक्त तृतीय भागस्य चतुर्थादि षष्ठाध्यायानां

## विषय सूची

—:(०):—



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

॥ समाप्तैषा सूची ॥

---

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# निरुक्तम्

## द्वितीयः खण्डः

## अथ नैगमं काण्डम्

## अथ चतुर्थाध्यायः

### प्रथमपादः ।

—(:*:)—

ॐ । एकार्थमनेकशब्दमित्येतदुक्तमथयान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमांस्तदैकपदिकमित्याचक्षते जहा जघानेत्यर्थः ॥ १ ॥

"एकार्थमनेकशब्दमित्येतदुक्तम्"। किमर्थमिदमुच्यते ? न हि यद्यद् वृत्तं तत्तद् वक्तव्यम्, इदं वृत्तमिदं वर्त्तिष्यत इति। यद्यद् वृत्तं तत्तदनुक्तमपि प्रतीयते, यच्च वक्ष्यमाणमिति। आह,—सङ्क्षेपतो निगमनाय यदुक्तं यद्वा वक्तव्यं प्रतिजानीथ, समासविस्तराभ्यां हि सुखमाधस्त्यं प्रकरणमवधारयिष्यामहे, गृहीतार्थं सङ्क्षेपाच्च विस्तरेणोत्तरग्रन्थमुच्यमानं सुखमवभोत्स्यामहे। अपिचोक्तमन्यत्रापि,—

"विस्तीर्य्य हि तमज्ञानमृषिः सङ्क्षेपतोऽब्रवीत्।
इत्थं हि विदुषां लोके समासन्यासधारणम्॥"

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शृणु,—समासतो यदुक्तं यच्च वक्तव्यम् "एकार्थमनेकशब्दमिति"—एतत् पुरस्तात् सूचितम्, एतावन्तः समानकर्माणो धातवः, एतावन्त्यस्य सत्त्वस्य नामधेयानि,—इत्यनेन वाक्येन। यदेतत् "गौरिति पृथिव्या नामधेयम्"—इत्यत आरभ्य नामाख्यातोपसर्गनिपातानां प्रपञ्चनञ्च, तत्त्वभेदपर्य्यायसङ्ख्यासन्दिग्धोदाहरणतन्निर्वचनव्याख्याप्रविभागेनोक्तम्। स एव नैघण्टुकस्य प्रकरणस्य निगमव्याजेन सर्वथाऽप्यर्थः सङ्क्षेपत उक्तः, शास्त्रसम्बन्धश्चैवमनुसृतो भविष्यति। प्रकरणद्वयस्य चास्यैवमपुनरुक्तता प्रदर्शिता भविष्यतीत्यनेनाभिप्रायेण एकार्थमनेकशब्दमित्युक्तम्। एकोऽर्थः पृथिव्यादिः, अनेकेषां गवादिशब्दानाम्, यत्र तत्त्वभूतः कथ्यते, अनेके च गवादिशब्दाः पृथिव्यादेरेकस्यार्थस्य यत्राभिधायिनः कथ्यन्ते, तदिदमेकार्थमनेकशब्दं प्रकरणम्। अत्रैकेनार्थेनानेके शब्दा लक्ष्यन्ते, अनेकैः शब्दैरेकोऽर्थः। ततो लक्षितलक्षणया वृत्त्या प्रकरणं लक्ष्यते। अत्र यद्यपि गतिकर्मणां द्वाविंशतिशतसङ्ख्यानामविशिष्टं गमनमेकोऽर्थ उक्तः, तथापि प्रसिद्ध्यानुरोधाय "कसति" "लोठते", "श्चोतते"—इत्येवमादयः प्रतिनियतसत्त्वगमनविषया एव द्रष्टव्याः। तद्यथा,—य एवोत्कटिक उरसा वा गच्छति, स एव कसतीत्युच्यते, नेतरो य ऊर्द्ध्वो गच्छति। तथा च,—य एव निम्नेन प्रदेशेन कश्चिदचेतनो लोष्ट्रादिरन्यो वा चेतनः पुरुषादिः अकामकारेण गच्छति, स एव लोटत इत्युच्यते, नान्यः। तथा च,—यदेव द्रवद्रव्यं किञ्चित् स्रवति, तदेव श्चोतत इत्युच्यते, नान्यत्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं गच्छतिकर्मणामेकार्थत्वेऽपि सति प्रसिद्धे सामर्थ्याद् गमनविशेषेषु यथार्थं विनिवेशो द्रष्टव्यः। देशान्तरप्राप्तिस्तु चलनपूर्विका, सर्वेषां समानं कार्य्यम्, इत्यत एकार्थत्वमेषामुक्तम्। सामान्य शब्दाश्च क्वचिद् विशेषवाचिनो भवन्ति, विशेषशब्दाश्च क्वचित् सामान्यवाचिनः, तदप्युपेक्षितव्यम् ॥

एकार्थमनेन समासतो नैघण्टुकं प्रकरणमनुसृतम्, "अथ" इदानीं यद्व्याख्यातव्यं, तत् समासतः प्रतिज्ञायते।—"यानि अनेकार्थानि एकशब्दानि" पुरस्तात् समासतः सूचितानि, एतावतामर्थानामिदमभिधानमित्येवम्, "तानि" "अतः" परम् "अनुक्रमिष्यामः" व्याख्ययेत्यभिसम्बन्धः। किंलक्षणा पुनरिह व्याख्या? इति। तदुच्यते,—

"तत्त्वं पर्य्यायशब्देन व्युत्पत्तिश्च द्वयोरपि।
निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे ॥"

यान्येतानि दयत्यकूपारादीनि पदानि अनेकैरर्थैरुपदयादानदहनहिंसादिभिरर्थवन्ति, यानि चैतान्यर्थजातान्युपदयादानदहनहिंसादीनि, एकशब्दवाच्यानि, तान्येवमितरेतरविशेषणविशेष्यभावलक्षणोपलक्षितानि, एकप्रकरणतामुपगतानि, एवम्प्रकारया ऐकपदिकप्रकरणव्याख्यया 'अनुक्रमिष्यामः' वर्णयिष्यामः। अत्रार्थस्याप्रतीयमानस्य पर्य्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या, शब्दस्यापि व्युत्पादनं व्याख्या। एवमेते द्वे व्याख्ये। तयोरर्थपरिज्ञानमेकस्याः कार्य्यम्, शब्दपरिज्ञानमेकस्याः। तदेतदुभयकप्येकैकस्मिन् नैगमे पदे यथासंम्भवं व्याख्यास्यते ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आह,—किमनेकार्थान्येव केवलानि अस्मिन् प्रकरणे व्याख्यायन्ते ? नेत्युच्यते,—"अनवगतसंस्कारांश्च निगमान्"। 'अनवगतसंस्कारान्' अविज्ञातसंस्कारानित्यर्थः। येषां प्रकृतिप्रत्ययादिसंस्कारो न साकल्येन ज्ञायते, तांश्च निगमान् अत्रैव व्याख्यास्यामः। पूर्वाणि चानेकार्थानि अनवगतसंस्कारांश्चेति च शब्दः॥

तदेतदेवम्प्रकारं प्रकरणं यत्रैतदुभयं व्याख्यायते, "तत्" "ऐकपदिकम्" "इति" अनेन नाम्ना अन्येऽप्याचार्य्याः "आचक्षते" निरूढा हीयमस्मिन् प्रकरणे सञ्ज्ञेत्यभिप्रायः। पूर्वस्मिन् प्रकरणे गणशः पदानां विरचनापेक्ष्यैतदैकपदिकमुच्यते, अत्र त्वेकैकमेव पदं समाम्नातम्। तद्यथा,—"जहा, निधा"—इत्येवमादीनि। यत्र पुनः क्वचिदनेकान्यपि समाम्नातानि, तद्यथा,—"देवो देवाच्या कृपा" "सोमो अक्षाः"—इत्येवमादीनि तत्रैव तत्प्रयोजनं वक्ष्यामः॥

एवं प्रकरणार्थं सङ्क्षेपतः प्रतिज्ञाय क्रमेण वर्णवृत्तित्वाच्च प्रथमं यत् पदं, तदुपादीयते,—"जहा(१)"—इति। आह,—किमेतदनवगतसंस्कारमुतानेकार्थम् ? उच्यते,—स च जहीत्यनेनानुपपन्नसंस्कारेणोक्तो भवति। अत्र हन्तेर्जहातेश्च सन्देह इति भाष्यकारेणावधृतं "जघानेत्यर्थः"—इति। आह,—कुतः पुनर्विशेषावधारणं हन्तेरेवात्र रूपम्, न पुनर्जहातेः ? इति। उच्यते,—निगमात्॥ १॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

को नु मर्य्या अमिथितः सखा सखायमब्रवीत्। जहा को अस्मदीषते। मर्य्या इति मनुष्यनाम मर्य्यादाभिधानं वा स्यान्मर्य्यादा (मर्य्यैरादीयते मर्य्यादा) मर्य्यादिनोर्विभागो मेथतिराक्रोशकर्मापापकं जघान कमहं जातु कोऽस्मद्भीतः पलायते निधा पाश्या भवति यन्निधीयते पाश्या पाशसमूहः पाशः पाशयतेर्विपाशनात् ॥२॥

कतमः पुनरसौ निगमः? इत्याह,—"को नु मर्य्याः (ऋ० सं० ६, ३, ४६, २)"—इति। त्रिशोकस्येयमार्षम्। गायत्री। महाव्रते महदुक्थे तृचाशीतिषु शस्यते। अस्यामृचि जहेत्यस्य शब्दस्य पूर्वोत्तरपदाविरोधप्रकरणशब्दसारूप्यार्थोपपत्तिभिः संस्कारानवगमेऽपि सति हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः। कथम्? इति, श्रृणु,—"मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु। वधीर्मा शूर भूरिषु॥" (ऋ० सं० ६, ३, ४८, ४)। 'मा' 'नः' 'एकस्मिन् आगसि' 'वधीः' हे 'शूर!' 'मा' 'द्वयोः' आगसोः वधीः। 'उत' अपि च 'त्रिषु' अपि आगस्सु मा वधीः। 'भूरिषु' अपि अपराधेषु 'मा वधीः' इति। एतस्मिन् प्रकरणे ब्रवीति "को नु मर्य्याः"—इति। हे 'मर्य्याः' मनुष्याः! युष्मानेव तावत् पृच्छामि,—'अमिथितः' अनाक्रुष्टः, परुषमपि वा किञ्चिदनुक्तः, अपि च 'सखा' समानख्यानः, 'सखायम्' एव समानख्यानमेव सन्तम् (यथा भवतामहं यज्ञे समान-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ख्यानः, एवं सन्तम्) 'अब्रवीत्'। को न्वेवमाह? 'अमिथितः' अनाक्रुष्टो ब्रूयाद् यः कश्चित्,—यथा यूयमनाहूताः सन्तो मां ब्रूत मा वधीरिति। "जहा को अस्मदीषते"। अपापकशब्दोऽत्र भाष्यकारेणाध्याहृतः प्राक् जहाशब्दस्य अर्थोपद्योतनार्थम्,— 'अपापकं" सन्तं "कमहं" "जघान" हतवान् "जातु" कदाचिदि-त्यर्थः। "अपापकं" "कम्" "अहम्" "जातु"—इति सर्वमेतत् अध्याहृतं भाष्यकारेण, 'जहा' शब्दस्य निराकांक्षीकरणार्थमध-स्ताच्चोपरिष्टाच्च, एवं हि जहाशब्दः परिसमाप्तार्थो भवति। न कदाचिदपि कश्चिदपापको मया हतपूर्व इति, पापकारिणन्तु हन्मीत्यभिप्रायः। ते यूयमपापा एवाजस्रं भूयास्थ, न वो हनिष्यामि। यत् पुनरेतदुक्तं भवद्भिः 'भूरिष्वप्यागस्सु, मास्मान् वधीः'—इति, कथमागस्कारी न हन्यते? श्वा पुरोडाशमवलिह्यात्, न च कस्यचित् कस्मिंश्चिदपि श्वता स्यात्, सर्वं वा असमञ्जसमेव स्यात्, यदि पापकारिणो न हन्येरन्, अथ मनुष्यानपापानपि त्वं हंस्येवेति। अत्र ब्रूमः,— "कः" "अस्मत्" अस्मत्तः अपापकारी सन् "भीतः" 'ईषते' "पलायते" इत्यर्थः, न कश्चिदप्यपापकारी मत्तः उद्विजमानः पलायते, स हि शुद्धेन चेतसा अभिमुख एव मामभ्येति, य एव तु पापकारी भवति, स एवात्मापराधशङ्कितया बुद्ध्या अस्मत्तो भीतः पलायते इत्यभिप्रायः। अत्रापि कोऽस्मदित्येतस्मात् पञ्चमीयोगात् ईषतेर्गमनमात्रसामान्यवाचिनः सतो गमनविशेषे पलायनेऽवस्थानम्। यो हि यस्माद् बिभेति, स तस्मात् पलायते।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भीतशब्दश्चाध्याहृतः ? न ह्यभीतः कश्चित् पलायते। इत्येष समस्तार्थः ॥

अथैकपदनिरुक्तम्।—"मर्य्या इति" मनुष्यनामसु पठितम्। इहापि चैतत् "मनुष्यनाम" एव। तस्योक्ता व्युत्पत्तिः,— "मर्य्यो मनुष्यो मरणधर्मा" इति। अथ "वा" "मर्य्यादाभिधानम्" एव अत्र "स्यात्" न मनुष्यनाम। यदा मर्य्यादाभिधानमेतदभिप्रेतं भवति, तदेवमर्थवत्तास्य योजयितव्या,— "मर्य्यादा, मर्य्यैरादीयते"। का नु एषा मर्य्यादा,—यतो धर्मज्ञाः सन्तो यूयमनाहता अनाक्रुष्टाश्च असदभियोगं सखायः सन्तो मम सख्युर्दत्तं मा वधीः ? इति, नैतन्याय्यमित्यभिप्रायः। "मर्य्यादा, मर्य्यादिनोर्विभागः"। संश्रिता या भूमिरुपक्षीणा, सा मर्य्येरत्युच्यते ( विषयान्त इत्यर्थः ), आदिन्यस्य विषयस्योपक्रमश्चोच्यते। संश्रितायाश्च भूमेरादेश्च विभागकारिणी या भूमिः, सा मर्य्यादेत्युच्यते। "मेथतिराक्रोशकर्मा"। चतस्रः पत्न्योऽश्वमभिमेथतीति प्रसिद्धमश्वमेधे मेथतेराक्रोशकर्मत्वम्। लोकेऽपि च शालो मेथनक इत्युच्यते, स ह्यभीक्ष्णमाक्रुश्यते, आक्रोशति च सः ॥

"अपापकम्"—इत्यस्य भाष्यपदस्यापरो व्याख्यामार्गः,—को न्वेवं ब्रूयादपापकं सन्तं मा वधीरिति ? जघान कमहं जातु पापकमपापकं वा ? कोऽस्मद्भीतः पलायते ? न कश्चिदपि, सौम्योऽहमित्यभिप्रायः। वलकृति सम्बन्धादिन्द्र एवायम् ॥

एवमेतस्मिन् मन्त्रे प्रकरणपूर्वोत्तरपदाविरोधशब्दसारूप्या-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

र्थोपपत्तिभिर्हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः, जहातौ ह्येतस्मिन् कल्प्यमाने प्रकरणं पूर्वोत्तराणि च पदानि विरुध्यन्ते शब्दसारूप्येऽपि सति। तस्मान्नात्र जहातेरवकाशोऽस्ति, पारिशेष्यात् हन्तेरेतद्रूपमित्युपपन्नं भवति ॥

एवमेव सर्वेष्वेवानवगतसंस्कारेषु योज्यम् ॥

"निधा (२)"—इति। एतत् पदमनवगतसंस्कारावसरप्राप्तं व्याख्यानीयमैकपदिकव्याख्याधर्मेण प्रकृतानुवृत्त्या स व्याख्यातव्य इति तदभिधानाभिधेयनिगमनिर्वचनानुक्रमप्रवृत्त्या ब्रूमः, —"निधा पाश्या भवति"—इति। पर्य्यायेण तत्त्ववचनम्। यो वालमयः स्नायुमयो वा पाशसमूहः, पक्षिग्रहणार्थः, स पाश्येत्युच्यते। अधुना द्वावप्येतौ शब्दौ निर्वक्ति, निधाशब्दं पाश्याशब्दञ्च।—"यत्" यस्मात् इयं "निधीयते" नीचैर्धार्य्यते पक्षिग्रहणार्थम्। तस्मात् निधिरिति प्राप्ता, निधानीति वा। सेयमेवं प्राप्ता सती निधेत्यनवगतसंस्कारेणोच्यते। पाश्याशब्द पर्य्यायाभिधानप्रसक्तं निर्ब्रवीति प्रत्ययोत्पादनार्थम्,—"पाश्या पाशसमूहः" इति। पदान्निष्कृष्य तद्धितार्थो निरुक्तः, अधुना पदार्थं निर्ब्रवीति,—"पाशः पाशयतेर्विपाशनात्" तेन हि विविधमतिशयेन वा पाश्यते बध्यत इत्यर्थः ॥ २ ॥

वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्तमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान्। वयो वेर्बहुवचनं (सुपर्णाः) सुपतना

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आदित्यरश्मय उपसेदुरिन्द्रं याचमाना अपोर्णुह्याध्वस्तं चक्षुश्चक्षुः ख्यातेर्वा चष्टेर्वा पूर्द्धि पूरय देहीति वा मुञ्चास्मान् पाशैरिव बद्धान् पार्श्वतः श्रोणितः शितामतः पार्श्वं पर्शुमयमङ्गं भवति पर्शु स्पृशतेः संस्पृष्टा पृष्ठदेशं पृष्ठं स्पृशतेः संस्पृष्टमङ्गैरंगमंगनादञ्चनाद्वा श्रोणिः श्रोणतेर्गतिचलाकर्मणः श्रोणिश्चलतीव गच्छतो दोः शिताम भवति दोर्द्रवतेर्योनिः शितामेति शाकपूणिर्विषितो भवति श्यामतो यकृत्त इति तैटीकिः श्यामं श्यायतेर्यकृद् यथा कथा च कृत्यते शितिमांसतो मेदस्त इति गालवः शितिः श्यतेर्मांसं माननं वा मानसं वा मनोऽस्मिन् सीदतीति वा मेदो मेद्यतेः ॥ ३ ॥

अधुना यस्मिन् मन्त्रे निधाशब्दः पाशसमूहवाची, तमानीय ब्रवीति, निधाशब्दनिगमार्थम् । कतमः पुनरसौ मन्त्रः ? इत्याह,— "वयः सुपर्णा" इति । शाक्त्यस्य गौरिवीतेरियमार्षम् । त्रिष्टुप् । अग्निष्टोमे मरुत्वतीयशस्त्रस्य परिधानीयैषा निविद्धानीये सूक्ते । 'वयः' "आदित्यरश्मयः" । "वेतेः" गत्यर्थस्य (अदा० प०) नामीभूतस्य "बहुवचनम्" विः, वी, वयः इति । 'सुपर्णाः' "सुपतनाः" एत एव "उपसेदुः" । उपसीदन्ति व्युष्टायां रात्रा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वहन्यहनि। कमुपसेदुः ? 'इन्द्रम्' आदित्यम्। 'प्रियमेधाः' प्रिययज्ञाः। त एव यज्ञसहचारित्वात्, उद्गतेषूदितेषु हि तेषु यज्ञास्तायन्ते। 'ऋषयः' त एव, अर्षणात्, प्रकाशकत्वात्। 'नाधमानाः' त आदित्यमुपसेदुः। कमर्थं "याचमानाः"? इति। "अपोर्णुहि" अपावृणु जनानामेतत् 'ध्वान्तम्' "आध्वस्तम्" आच्छादितं तमसा। 'चक्षुः' 'पूर्द्धि' "पूरय" शुष्मदननुगृहीतमसफलमिवैतेषां जनानामेतच्चक्षुः, तत् पूर्द्धि, सफलं कुर्वित्यर्थः। अथवा 'पूर्द्धि' "देहि" इति। यदुक्तं स्यात् अस्तं हि गच्छता त्वया एतेषां जनानामाप्तमिव यच्चक्षुः, तत् पुनरुद्यंस्त्वमेतेभ्यो जनेभ्यो देहि। कथञ्च पुनर्देहि ? 'मुमुग्धि अस्मान्' "मुञ्चास्मान्" 'निधया' "पाशैः" पाशसमूहेन पक्षिणः "इव" एतस्मिन् मण्डले "बद्धान्"। यावदेतत्तावदशेषं तमो नाशयित्वा एतेषां जनानामेतच्चक्षुर्युग्मं, सफलं वा कुर्मः। एवं ह्येतत् त्वयैव दत्तं भविष्यतीत्यभिप्रायः। एतमर्थं याचमाना उपसेदुः॥

"चक्षुः "ख्यातेर्वा" दर्शनार्थस्य, "चष्टेर्वा" दर्शनार्थस्यैव। एवमेतस्मिन् मन्त्रे 'मुमुग्ध्यस्मान्निधये च बद्धान्—इत्येतेषां पदानां मध्ये वर्त्तमानस्य तृतीयान्तस्य निधाशब्दस्य पाशसमूहादन्यः कोऽर्थः स्यात् ?—'मुमुग्धि' 'बद्धान्'—इत्येतौ शब्दौ येन बद्धाः, यस्माच्च मुच्यन्ते, तदर्थाभिधायिनं शब्दमाकाङ्क्षतः। तत्रैवं सति वरमविद्यमानस्याध्याहाराद् विद्यमानस्य, निधाशब्दस्य, अनयोः शब्दयोर्मध्ये वर्त्तमानस्य, आकाङ्क्षितार्थाभिधायकत्वकल्पना इति निधाशब्दः पाशसमूहाभिधायित्वेऽवतिष्ठते,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इतरथा० ह्ययमितरैः पदैरसम्बन्ध्यमानोऽनर्थक एव स्यात्। तस्मादेवं सर्वत्रानवगतसंस्काराणामसिद्धार्थानां पदानां सामर्थ्या-दाकाङ्क्षितरूप एवार्थेऽवस्थानं भवति, तदुपपाद्यं सर्वत्र, ग्रन्था-तिगौरवभयात् तु सङ्क्षेपतोऽत्र दर्शयिष्यामः ॥

"शितास (३)"—इति। एतदनवगतम्। अनुपन्यस्यैव पदम्, अभिधेयं चानुक्त्वैव निगममेव प्रथमं पठत्याचार्य्यः। विप्रतिपत्त्यानेकार्थत्वमस्येति। "पार्श्वतः श्रोणितः शितामतः"—इति निगमः (य० मा० सं० २१, ४३)। पशुहविषः प्रैषेऽयं मन्त्रशेषः। कतमः पुनरसौ प्रैषः ? "होता यक्षदिन्द्राग्नीछागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमाना॑ सुमत्क्षराणा॑ शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेता॑ हविर्होतर्यज ॥" (य० मा० सं० २१, ४३)—इति। सर्व एव गद्यः। वामदेवस्यार्षम्। मैत्रावरुणो ब्रवीति। 'होता यक्षत्' होता यजत्वित्यर्थः। तेन चेज्यमानौ 'इन्द्राग्नी' अस्मात् 'हविषः' पश्वाख्यात् 'मध्यतः' यदेतत् मेदः' 'उद्भृतम्' अस्यां स्रुच्यां हितम्। तस्मान्मेदः पर्य्यस्यति, श्रपयति, त्रेधा मेदः करोतीति ह्युक्तम्। एतन्मेदः 'अद्य' एतस्मिन्नहनि सद्यः उद्भृतम् 'आत्ताम्' भक्षयेताम्। 'पुरा द्वेषोभ्यः' हविर्मेथिभ्यः पिशाचादिभ्यः। 'पुरा पौरुषेय्या गृभः' अर्वागिडावदानात्, इडा हि पुरुषार्थं गृह्यते, प्राक् तस्माद् ग्रहणात्। 'इन्द्राग्नी' 'घस्तां' भक्षयेतां,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"नूनं' निश्चयेन। एतस्मिन् 'घासे' घसनकाले, भक्षणकाले प्राप्ते 'अज्राणाम्' अनभिभूतानां रक्षोभिः आदरेण प्रतिविशिष्टैर्मन्त्रैः संस्कृतानाम्। अथवा 'घासेअज्राणाम्' इत्येकं पदम्। तदायमर्थः,—घासे हि सति पशवो न जीर्य्यन्त इति 'घासेअज्राः'। 'यवसप्रथमानां' यवसः अशनम्, तस्य अनेकप्रकारस्य श्रेष्ठत्वादेतान्येव देवतृप्तये प्रथमानि, तेषां यवसप्रथमानाम्। 'सुमत्क्षराणाम्' स्वयमेवैतानि भक्ष्यमाणानि स्वादुत्वादुदरं प्रति क्षरन्तीति सुमत्क्षराणाम्। 'शतरुद्रियाणाम्। बहुस्तुतीनाम्। अथवा 'शतरुद्रियाणां' बहुशो रुग्णानाम्। 'अग्निष्वात्तानाम्' अग्निष्वात्तादीनाम्, अग्निपाकेन मृदुत्वात् स्वादूकृतानाम्। 'पीवोपवसनानाम्' पीव्ना छागेन, उपवस्तानाम्, अथवा पीवानं छागमुपगम्योषितानाम्। 'पार्श्वतः' अङ्गात् 'अवत्तानाम्' 'श्रोणितः' अवत्तानाम्। 'शितामतः' अवत्तानाम्। 'उत्सादतः' च उच्छेदनस्थानात् 'अङ्गादङ्गात्' अवत्तानाम्। 'करतः' कुरुताम् इन्द्राग्नी! तृप्तिम् एतेषाम् एवंलक्षणानामवदानानाम्। हे 'होतः'! यथैताविन्द्राग्नी 'जुषेताम्' आसेवेताम्, एतत् 'हविः'। तथा त्वमपि 'यज' ॥

निगमप्रसक्तमुच्यते,—"पार्श्वं पर्शुमयमङ्गं भवति"। पर्शवो वङ्क्रय उच्यन्ते, तन्मयं हि तद् भवति पार्श्वपदलक्षणम्। आह,—पर्शुः कस्मात्? उच्यन्ते,—"पर्शुः, स्पृशतेः"। आह,—किमनया स्पृष्टम्? इति। उच्यते,—"संस्पृष्टा पृष्ठदेशम्" प्रति भवति। आह,—"पृष्ठं" कस्मात्? उच्यते—"स्पृशतेः"

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

(तु० प०) एव, तद्धि "संस्पृष्टमङ्गैः"। आह,—"अङ्गम्" कस्मात्? उच्यते,—"अङ्गनात्" अङ्गितं हि तत् कालेन भवति, गतमित्यर्थः (भू० प०)। "अञ्चनाद्वा"। अञ्चतिरपि गत्यर्थ एव (भू० प०)। धात्वन्यत्वमर्थैकत्वम्। पार्श्वशब्दप्रसक्तानुप्रसक्तमुक्तम्। अधुना श्रोणिशब्दं निगमप्रसक्तं निर्ब्रवीति,—"श्रोणिः श्रोणतेः" धातोः "गतिचलाकर्मणः" (भू० प०)। गतिनिमित्तं चलनं यस्य कर्म, सोऽयं गतिचलाकर्म, तस्य गतिचलाकर्मणः। किं कारणम्? "श्रोणिश्चलतीव" स्थानात् पशोः "गच्छतः"॥

शितामशब्दस्य तत्त्वमाचष्टे,—"दोः शिताम भवति" बाहुरित्यर्थः आह,—दोः कस्मात्? उच्यते,—"दोः" "द्रवतेः" (भू० प०) तस्य हि प्राणेन पशुर्द्रवति। श्रितमंसभावेन एतत्-कार्य्यं भवतीति शिताम। यदा दोर्विषये शितामशब्दः, तदैवं निर्वक्तव्यः। आह,—कयोपपत्त्या दोः शितामशब्देनोच्यते? शृणु,—पशोर्हि वाह्यानि चावदानानि, आभ्यन्तराणि च भवन्तीति। तत्र, पशोः पार्श्वे श्रोण्यावंसाविति वाह्यानि, जिह्वा-हृद्यकृतादीनि आभ्यन्तराणि। तत्रैवं सति पार्श्वतः श्रोणितः इत्येतयोरन्तरा वर्त्तमानः शितामशब्दः किमन्यद् दोष्णोऽभिदध्यात्। प्रायो हि नियामको भवति। एवं वाह्यावदानप्राये च शितामशब्दो वर्त्तते इति दोर्विषयः कल्पते। "योनिः शितामः"—"इति" शाकपूणिः" आचार्य्यो मन्यते। तत्र योनिः अनवदानीया एव। योनिसमानदेशस्तु गुदो नामावदानमस्ति, स योनिशब्देनोच्यते। स च गुदः "विषितो भवति"। 'विष्लृ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

व्याप्तौ' (जु० उ०), व्याप्तः स पुरीषेण भवति। अथवा विषित-मांसो विपुषितमांसः, विस्रस्तमांसः, स भवति। आह,—कयो-पपत्त्या शाकपूणेर्मते योनिः शिताम शब्देनोच्यते? इति। शृणु,—स हि श्रोण्यनन्तरो भवति, श्रोण्यनन्तरश्च शितामशब्द उच्यते,—श्रोणितः शितामत इति। शब्दसारूप्यमपि च किञ्चि-दस्ति,—विषितो भवति, शितामेति। अनयोपपत्त्या अनेन च शब्दसारूप्येण योनिः शिताम इति शाकपूणिर्मन्यते।

"श्यामतो यकृत्तः"—"इति" "तैटिकिः" आचार्यो मन्यते। यदुक्तं भवति श्यामत इति, तदुक्तं भवति शितामत इति। एवं हि बहुतरं शब्दसारूप्यं लक्ष्यते। एवञ्च सति यकृत्त एतदवदानं चोदितं स्यादिति गम्यते। किङ्कारणम्? तद्धि "श्यामं" श्यायतेः" (भू० आ०) धातोः, तद्धि सम्पर्कादुपपद्यते। आह,—"यकृत्" कस्मात्? उच्यते,—तद्धि मृदुत्वात् "यथा कथा च" अयत्नेनैव "कृत्यते" छिद्यत इत्यर्थः। "शितिमांसतो मेदस्तः"—"इति" "गालवः" आचार्यो मन्यते। श्वेतान्मांसात् 'शितिमांसतः'। कतमत पुनस्तत् श्वेतं मांसमिति? उच्यते—'मेदस्तः'। तस्मात् यदुक्तं भवति शितिमांसत इति, तदेवोक्तं भवति शितामत इति। एवमपि बहुतरं शब्दसारूप्यमस्ति। "शितिः" "श्यतेः" तनूकर-णार्थस्य (दि० प०), परो हि विवेकस्तेजसो मेदस्येवावतिष्ठते। "मांसं" "माननं वा" य एव हि मान्यो भवति, तदर्थमेतत् संस्क्रियते। "मानसं वा" सुमनसा हि तदुपादीयते। अथ वा य एव हि मनस्विनो भवन्ति, तैरुपादीयते। "मनोऽस्मिन् सीद-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तीति वा" सर्वस्यैव हि मांसे मनः सीदति। "मेदः" "मेद्यतेः" स्नेहनार्थस्य ॥

एवमेष शितामशब्दोऽनवगताभिधेयोऽनवगतसंस्कारोऽपि। एवमेतस्मिन् प्रकरणे अन्यान्यनवगतसंस्काराणि उपेक्षितव्यानि। उक्तं हि,—

"शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः।
सर्वमेतदनेकार्थे दशानवगमे गुणाः ॥"—इति।

(१) (२) (३) (४) (५) (६)
कतमे पुनस्ते ? इति। पदजात्यभिधेयस्वरसंस्कारगुणविभा-
(७) (८) (९) (१०)
गक्रमविक्षेपाध्याहारव्यवधानानि। तेषु चाभिधेयमपेक्ष्य निर्वचनं कर्त्तव्यम्। उक्तं हि,—

"धातूपसर्गावयवगुणसत्त्वं हि धातुजम्।
बह्वेकधातुजं वापि पदं निर्वाच्यलक्षणम् ॥
धातुजं धातुजाज्जातं समर्थार्थजमेव च।
वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥"—इति।

( १ ) पदजात्यनवगतम्,—"त्व" इति यथा, नाम, निपातो वा ?

(२) अभिधेयानवगतम्,—"शिताम" इति ॥ यथा।

(३) स्वरानवगतम्,—"वने न वायो" इति यथा।

(४) संस्कारानवगतम्,—"ईर्मान्तासः" इति यथा।

(५) गुणानवगतम्,—"करूलती" इति यथा।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

(६) विभागानवगतम्,—"मेहना" इति यथा।

(७) क्रमानवगतम्,—"उपरमध्वं मे वचसे" इति यथा।

(८) विक्षेपानवगतम्,—"द्यावा नः पृथिवी" इति यथा।

(९) अध्याहारानवगतम्,—"दानमनसो नो मनुष्यान्" इति यथा।

(१०) व्यवधानानवगतम्, "वायुश्च नियुत्त्वान्" इति यथा।

एकमपि पदं पदद्वितयं क्रियते—"पुरूषादः, पुरुषानदनाय" इति यथा।

पदद्वितयमपि चैकं पदं क्रियते,—"गर्भनिधानीं सनितुः" इति यथा।

आख्यातमपि च नाम क्रियते,—"सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः" इति यथा।

एवमेव शब्दार्थसङ्करोऽनेकप्रकार उपेक्ष्यः, दृष्टानुविधानात् छन्दसि यथासम्भवमनुविधेयः॥ ३॥

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः। राधस्तन्नो विदद्वस उभया हस्त्याभर। यदिन्द्र (चित्र) चायनीयं मंहनीयं धनमस्ति यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि त्वया नस्तद्दातव्यमद्रिवन्नद्रिरादृणात्येतेनापि वात्तेः स्यात्ते सोमाद इति ह विज्ञायते राध इति धननाम राध्नुवन्त्येनेन तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहरोभौ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

समुब्धौ भवतो दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मनो मनोतेः ॥४॥

"मेहना (४)—इति। एतदवगतम्। "मंहनीयम्" इति अवगमः। "यदिन्द्र चित्र मेहना"—इति निगमः। अत्रे-भौमस्यार्षम्। अनुष्टुप्। ऐन्द्री। स्वरपृष्ठानां स्वरसाम्नां
१ २र ३
प्रथमे स्वरसाम्नि "यज्जायथा अपूर्व्य" इति स्तोत्रियः, स्वर-
१ २ ३ २ ३
पृष्ठानां "यदिन्द्र चित्र मेहना" इति द्वे "या इन्द्र भुज
१ २ ३क
आभर" इति तृतीयानुरूपस्येति विनियोगः। हे "इन्द्र"! 'चित्रम्' "चायनीयम्" पूजार्हम्, "यत्" 'मेहना' "मंहनीयं" पूजार्हम्, तव 'राधः' "धनम्" "अस्ति" किञ्चित्, 'त्वादातं' "त्वया" च "दातव्यम्" एवावश्यं सुचिरमपि स्थित्वा "नः" अस्मभ्यम् "तत्" यतः, अतो ब्रूमः—हे 'अद्रिवः' वज्रिन्! "तत्" "नः" राधः हे 'विदद्वसो' आप्तधन! साम्प्रतमेव "उभाभ्यां हस्ताभ्याम्" अकृपणम् 'आभर' "आहर" मा चिराय इत्यभिप्रायः। अथ "वा" "यन्म इह नास्तीति" एतस्मिन् वाक्यैकदेशे "त्रीणि" "पदानि" "मध्यमानि" मध्ये भवन्तीत्यर्थः। कथं मेहना इत्येषा संहिता,—'मे-इह—न' इति? एतान्यस्याः संहितायाः पदानि। एवमेष वाक्यावयवः पञ्चपदो भवति। अत्र 'यत्'—इति प्रथमं पदम्; अतः परं 'मे' 'इह'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'न'—इत्येतानि त्रीणि मध्यमानि पदानि, 'अस्ति'—इति पञ्चमं पदम्। एवमभिप्रेत्य "इन्द्र चित्र"—शब्दादपकृष्योक्तं "त्रीणि मध्यमानि पदानि" इति। आह,—यद्येवम् पदविभागः, तदा कोऽर्थः? इति। उच्यते,—यत् मे मम गृहे नास्ति धनम्, तव च तत् अस्ति धनम्, दातव्यञ्च त्वया तावत् स्तोतृभ्यः, तद्धस्ताभ्यामस्मभ्यमाभरेति। बह्वृचानां 'मेहना'—इत्येकं पदम्। छन्दोगानां त्रीण्येतानि पदानि 'म, इह, न'—इति। तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ, एवञ्जातीयनिर्वचनोपप्रदर्शनार्थमुभयोश्च प्रामाण्यख्यापनार्थम्॥

आह,—पदकारयोः पदविकल्पे कोऽभिप्रायः? इति। उच्यते,—'विद्यावान्' विद्यमानधनो वा प्रतिविशिष्टतरं प्रार्थयते,—यच्च यस्य गृहे नास्ति, स तद्विशिष्टमविशिष्टं वा प्रार्थयेत, न चानयोरुभयोरपि विशेषलिङ्गमस्ति, तस्मान्मंहनीयमित्येतयार्थमत्या मेहनेत्येवमेकं पदमभिप्रेतं शाकल्यस्य। गार्ग्यस्य पुनर्यन्म इह गृहे नास्ति तदाहरेत्यभिप्रायः। एवमत्र विशेषलिङ्गाभावाद्विप्रतिपत्तिः एवमन्येष्वपि शाखान्तरपदविकल्पेषु अनुविधानमर्थाविरोधेन कर्त्तव्यम्। एवमयं मेहनाशब्दो राधःशब्दसामानाकरण्ये वर्त्तमानो यन्मंहनीयं राधः, यद्वा मद्गृहे नास्तीति धनविशेषणत्वात् कमन्यमर्थं ब्रूयात्? तस्मान्मेहनेति सामर्थ्याद्धनविशेषणमेतदित्युपपत्तिः॥

अधुना निगमप्रसक्तानि निरुच्यन्ते।—"अद्रिराद्दृणात्येतेन" अद्रिसारमयमेव ह्यायुधं भवतीति। अद्रिर्वज्र उच्यते। आह,—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अद्रिः कस्मात्? उच्यते,—आदृणाति आदारयतीत्यर्थः। अथवा सोमाऽभिषवग्रावभिस्तद्वान् अद्रिवान् स्यात्। तैरपि हि सोम आदार्य्यते "अपि वा" "अत्तेः स्यात्" अद्रिः। कुतः? एतन्निगमात्। कतमोऽसौ निगम इति "ते सोमाद इति ह विज्ञायते" "ते सोमादो हरी इन्द्रस्य निंसते (ऋ० सं० ८, ४, ३०, ४)"—इत्येतस्मिन्मन्त्रे विचार्यमाणे ज्ञायतेऽत्तेरद्रिः स्यादितिः। व्याख्यात एव शेषः। "राधः" "इति" एतत् "धननाम" स्मारयति। व्यभिचारित्वाद्वा शब्दानां धननामसु पठितमपि सदेतदवधारयति,—इहाप्येतद्धननामैव, नात्र व्यभिचारोऽस्तीति। पठिताभिधाननिरूपणेषु सर्वेष्वेतौ समाधी योज्यौ। "वित्तधन" इति प्राप्तधन! उभौ समुन्धौ भवतः, संपूर्णावित्यर्थः॥

"दमूनाः (५)"—इति। एतदनवगतम्। "दममनाः" दमूनाः स्यात्, दमे हि नित्यमस्य मनः, अक्रूरमना इत्यर्थः। "दानमना वा" दातव्यं मयेति यस्य मनसि स वा दमूनाः। "दान्तमना वा" दमेषु दान्तेषु यमनियमवत्सु पुरुषेषु यस्य मनः, स वा दमूनाः। अथवा "दम इति" एतद् गृहनाम" एतद् यस्य मनसि ममेदमिति, स दमूनाः "स्यात्" गृहपतिरग्निः॥४॥

जुष्टो दमूना अतिथिर्दुरोण इमन्नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भोजनानि ॥ अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु परकुलानीति वा गृहाणीति वा (अयमपीतरोऽतिथिरेतस्मादेव) दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पा इमं नो यज्ञमुपयाहि विद्वान् सर्वा अग्ने अभियुजो विहत्य शत्रूयतामाभर भोजनानि विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा धनानीति वा मूषो मूषिका इत्यर्थो मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव ॥ ५ ॥

निगमः,—"जुष्टो दमूनाः"—इति। वसुश्रुतस्यात्रेयस्येयमार्षम्! त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते स्विष्टकृत्पुरोनुवाक्या चेयं चातुर्मास्येषु साकमेधे। हे भगवन्नग्ने! 'जुष्टः' आसेवितस्त्वमस्माभिः स्तुतिभिः 'दमूनाः' दममनाः, अक्रूरमनाः भूत्वा, ततः 'उपयाहि'। अथवा गृहं ममेदमिति चेतोऽवस्थाप्य, तत् उपयाहि। अथवा दानमना भूत्वा, दातव्यमेभ्यो मयेत्येवं चेतोऽवस्थाप्य, तत उपयाहि। अथवा दान्तेष्वेव हि तव मनो वयञ्च दान्ताः, 'अतिथिः' च त्वमग्निहोत्रिणां दान्तमनसां प्रातः सायञ्च उद्बोध्यमानो भवसि स्वभाव एवैष तवाग्निहोत्रिणामतिथिस्त्वेनोपस्थातव्यमिति, अतो ब्रूमः वयमपि दान्तमनसोऽग्निहोत्रिणश्च, अस्माकमपि य एषः 'दुरोणे' यज्ञगृहे यज्ञस्तन्यते, तं त्वमुपयाहि, तमागच्छ, 'विद्वान्' जानानः स्वम-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धिकारं भक्तांश्चास्माकम्। किञ्च, 'विश्वाः' सर्वाः 'अभियुजः' अभितः सर्वतो युजः, अभियोक्त्र्यः, शत्रुसेनाः त्वदागमनप्रतिबन्धेन वर्त्तमानाः, 'विहत्य' नानाप्रकारं हत्वा, तत उपयाहि। किञ्च, एवमागच्छंस्त्वं शृणु यत्कुरुष्व,—'शत्रूयतां' येऽस्माकं शत्रुत्वं कामयन्ते कर्त्तुम्, तान् विहत्य, तेषां बलानि, ततो यानि तेषां भोजनानि अन्नानि, धानानि वा, तानि अस्मभ्यम् 'आभर', आहरेति समस्तार्थः॥

निगमप्रसक्तोऽतिथिशब्दो दुरोणशब्दश्च। आह,—"अतिथिः" कस्मात्? उच्यते,—"गृहान्" "अभि" आभिमुख्येनासौ "अतितो भवति" गत इत्यर्थः। "अतति—पतति" इति गतिकर्मसु पठितम्, अथवैवमन्यथा स्यात्, "अभ्येति" अभ्यागच्छति "तिथिषु" पौर्णमास्याद्यासु "परकुलानि" यजमानकुलानीत्यतिथिः। "अयमपीतरोऽतिथिरेतस्मादेव"। "दुरोण इति" एतत् "गृहनाम"। आह,—किङ्कारणम्? उच्यते—ते हि गृहाः "दुरवा भवन्ति, अवतिस्तर्पणार्थः, "दुस्तर्पाः" इत्यर्थः। उक्तञ्च,—'कुटुम्बतन्त्राणि हि दुर्भराणि' —इति। एवमेतस्मिन्मन्त्रे, जुष्टः, दमूनाः, अतिथिः, विद्वान्, हे अग्ने! यज्ञमुपयाहि! इत्येतस्मिन्नधिकारे वर्त्तमानः 'दमूनाः' शब्दः कमन्यमग्निविशेषणादर्थं ब्रूयात्? न कञ्चिदपि, परिशेषाद्दमूना इत्येतदग्निविशेषणमेवेति सिद्धम्॥

"मूषः (६)—इति। एतदनवगतम्। बहुवचनञ्चैतत्, मूट्, मूषौ, मूषः इत्येवम्। आह,—कुत एतत्? उच्यते,— "व्यदन्ति" इत्येतस्मिन्नाख्याते बहुवचननिर्देशात्, मूषो व्यदन्ति'

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

—इत्येतत् सम्बध्यते ! "मूषिकाः—इति" अनेनावगतसंस्कारेण यः "अर्थः" उक्तः स्यात्, स एव मूष इत्युक्तः प्रसिद्धार्थेन अभिधानेन। 'मूषः'—शब्दस्य तत्त्वमाख्यातम्, अधुनाऽऽख्यातप्रसक्तस्य मूषिकाशब्दस्य निर्वचनं करोति,—"मूषिकाः पुनर्मुष्णातेः"। "मुष स्तेये (क्र्या० प०)" इति। अस्य "मूषः अपि" च "एतस्मात् एव" ते हि हरन्ति धान्यादीनि ॥ ५ ॥

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः। मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारन्ते शतक्रतो वित्तं मे अस्य रोदसी॥ सन्तपन्ति मामभितः सपत्न्य इवेमाः पशवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति सन्तपन्ति माध्यः कामाः स्तोतारं ते शतक्रतो ( वित्तं मे अस्य रोदसी ) जानीतं मेऽस्य द्यावापृथिव्याविति त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभौ तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रं भवति त्रितस्तीर्णतमो मेधया बभूवापि वा संख्यानामैवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥

"सं मा तपन्ति"—इति निगमः,—"सं मा तप०—० रोदसी"—इति। आप्त्यस्य त्रितस्य, कुत्सस्य, वेयमार्षम्। पङ्क्तिः। ऐन्द्र्येषा। "संतपन्ति" "माम्" "अभितः" सर्वतोऽवस्थिताः,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कूपे पतितुस्य एताः, "कूपपर्शवः" कूपेष्टकाः, सङ्कटेऽवस्थितम्। कथं पुनः संतपन्ति मामभितः? 'सपत्नीरिव' यथा समानभर्त्तृका योषितः (परस्परं वा पीड्यन्ते) एकं भर्त्तारमभि सन्तपेयुः दुर्वचोभिः, इदमस्याः त्वया कृतम्, इदं मम न कृतमिति, एवं मामेताः कूपपर्शवः सन्तपन्ति, ताभिः कूपेष्टकादिभिः अहं पीड्ये। किञ्च, 'मुषो न' "मुषिकाः इव" 'शिश्नाः "शिश्नानि" "व्यदन्ति" अदन्ति तानि। अन्नवेष्टितानि, अन्नमिश्राणि, अन्नमिश्रोदकपायितानि "सूत्राणि" "व्यदन्ति"। सूत्रशब्दोऽध्याहृतः उपपत्तिं दृष्ट्वा भाष्यकारेण। विविधमदन्ति भक्षयन्ति। अथ "वा" "स्वाङ्गाभिधानम्" एतत् "स्यात्"। स्वाङ्गाभिधानमिति शेपोऽमिप्रेतः, भवति हि तिरश्चामेषः स्वभावः,—यच्छेपं भक्षयन्ति। अथवा लाङ्गूलमपि सादृश्यात् शिश्नमुच्यते, भवति हि मूषिकाणामेष स्वभावः,—स्नेहभाण्डे स्वलाङ्गूलं मुक्त्वा उद्धृत्य व्यदन्ति आस्वादयति। उपपद्यत उपमार्थ एवायमपीति शिश्नशब्दो विकल्प्यते। एवमेते मदुक्तः "सन्तपन्ति मा आध्यः"। आधयः "कामाः" सोमेन यक्ष्ये, दास्ये, भोक्ष्ये इत्येवमादयः। मां भक्षयन्ति, पीडयन्ति, असम्पूर्य्यमाणाः। 'आधिः'—इति मानसं दुःखमुच्यते। "स्तोतारं ते शतक्रतो" हे 'शतक्रतो!' तव नाम 'स्तोतारं' सन्तम् एते कामाः, एताश्च कूपपर्शवः, मा उभयपार्श्वीकृतं सबाह्यान्तरं सन्तापयन्ति। न च नाम त्वमस्मानेतस्या आपदः त्रायसे, समर्थः सन्? अहो न युक्तम्? भक्तपरित्यागो हि सतां सर्वेभ्यः पापेभ्यः पापिष्ठ इत्यभिप्रायः। यदा एवमर्थ्य-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मानो न शुश्राव इन्द्रः, तदा द्यावापृथिव्यौ आह,—यदि नायमिन्द्रः शृणोति मन्दभागधेयत्वादस्माकम्। युवामपि तावत् हे 'रोदसी !' 'वित्तम्' "जानीतम्" "अस्य" वचसः स्तुत्याख्यस्य यत् प्रयोजनम्, यदर्थमहं रोरवीमि, युवामपि चैतस्मात् अतिभयाकारात् कूपात् उद्धरतम्। यदि नायमिन्द्रोऽभ्युद्धरति युवयोरपि स्तोतैवाहमित्यभिप्रायः॥

आह,—पर्शवः इति एतावति श्रूयमाणे कुत एतत् कूपपर्शव एताः ? इति। उच्यते,—"त्रितः कूपेऽवहितः"—इत्येतस्मिन् सूक्ते विशेषलिङ्गात् तदेव भाष्यकारेण ख्यापितम्, अतएव सूक्तगताद्विशेषलिङ्गात् उपलभ्य "त्रितं कूपेऽवहितमेतत् सूक्तं प्रति बभौ" यत्रेयमृक्। तस्मात् कूपपर्शवः एता इति॥

सूत्राणि व्यदन्तीति सूत्रशब्दो भाष्यकारेणाध्याहृतः शिश्न इत्यस्य शब्दस्य शेषभूतो मूषकसम्बन्धेन, ते ह्यन्नगन्धेन सूत्राणि व्यदन्तीति। स्वाङ्गाभिधानपक्षे तु अध्याहारो नास्त्येवेति॥

"तत्र ब्रह्मेतिहासमिश्रम्"। तत्र तस्मिन् सूक्ते ब्रह्म, इतिहासमिश्रम्, इतिहासयुक्तमित्यर्थः। तत् यथा,—"त्रितः कूपेऽवहितो देवान् हवत ऊतये"—इत्येवमादि (ऋ० सं० १, १०, ७, १७)। "ऋग्मिश्रं" "गाथामिश्रं" च "भवति"। स पुनरितिहासः ऋग्बद्धो गाथाबद्धश्च। ऋक्प्रकार एव कश्चित् गाथेत्युच्यते, गाथाः शंसति, नाराशंसीः शंसतीति ह्युक्तं गाथानां कुर्वीतेति। स एष सूक्तानां स्वभावः प्रदर्शितः,—इतिहाससम्बन्धान्यपि सूक्तानि भवन्ति। तेषु प्रकरणादपि सन्दिग्धस्य

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पदस्यार्थोऽध्यवसेयः, यथेह पर्शुशब्दो भाष्यकारेणाध्यवसित इति ॥

भाष्यप्रसक्तं त्रितशब्दं निर्ब्रवीति,—"त्रितः तीर्णतमो मेधया" एकतद्वितयोः सकाशात् "बभूव"। "अपि वा" सङ्ख्यानिमित्तमेष एतत् "नाम" "अभिप्रेतं स्यात्"। कथम् ? "एकतः, द्वितः, त्रितः इति त्रयः" हि ते भ्रातरः "बभूवुः" तस्मात् सङ्ख्यानिमित्तमप्युपपद्यत एव। उक्तश्च,—"भार्य्याङ्गारेणाभ्युत्पादयत् तत एकतोऽजायत, द्वितीयं ततो द्वितः, तृतीयं ततस्त्रित इति ॥ ६ ॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः। सोमराजन् प्रण आयूंषि तारीरहानीव सूर्य्यो वासराणि ॥

ईषणेन वैषणेन वार्षणेन वा ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्द्धय च न आयूंषि सोमराजन्। अहानीव सूर्य्यो वासराणि। वासराणि वेसराणि विवासनानि गमनानीति वा कुरुतनेत्यनर्थका उपजना भवन्ति कर्त्तनहन्तनयातनेति जठरमुदरं भवति जग्धमस्मिन् ध्रियते धीयते वा ॥ ७ ॥

"इषिरः (७)"—इति। एतदनवगतम्। "ईषणेन वा एषणेन वा ऋषणेन वा" इति। एताः शब्दसमाधयः। "इषि

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रेण ते मनसा" इति समानविभक्त्यन्तत्वात् इषिरशब्दस्य प्रतीयत एवमतो विशेषणत्वमित्यभिधेयमनुक्त्वा निगममेव पठति, —"इषिरेण ते मनसा ०—० वासराणि"—इति (ऋ० सं० ६, ४, १२, २)। प्रगाथस्येयमार्षम्। त्रिष्टुप्। सौमी। हे भगवन्! 'सोम!' 'इषिरेण मनसा' त्वां प्रति सर्वात्मना गतेनेत्यर्थः। "ईषति, फणति"—इति गतिकर्मसु पठितम्। "एषणेनेति वा" स्यात्, इच्छावता फलप्रार्थनावतेत्यर्थः। "अर्षणेनेति वा" दर्शनवता। ईदृशेन मनसा किं कुर्मः? 'ते' तव योऽस्माकं स्वांशः, तं भक्षीमहि तं भक्षयेमहि। कथं पुनः भक्षयेमहि? 'पित्र्यस्येव रायः' यथा पित्र्यो धनांशः अविघ्नेन भक्ष्यते, भक्षितश्च सुखपरिणामो भवति, एवं तव वयं स्वमंशमविघ्नेन भक्षयेमहि, भक्षितश्च सुखपरिणामो मे अस्तु, मातीव भियेमहीत्यभिप्रायः। किञ्च, हे 'सोमराजन्!' 'प्र' 'न' 'आयूंषि' 'तारीः' तारय च प्रवर्द्धय च नः आयूंषि। कथं पुनः प्रवर्द्धय? "अहानि इव सूर्य्यः वासराणि"। यथा सूर्य्यः वासराणि वासन्तिकान्यहानि। "वासराणि" इति "वेसराणि"। शीतोष्णाभ्यां हि द्वाभ्यां तानि सरन्ति, तेषु हि शीतोष्णं भवति, रात्रौ शीतम्, दिवा उष्णम्। अथवा "विवासनानि" स्युः, तानि हि तत् शीतं विवासयन्ति नाशयन्तीत्यर्थः। "गमनानीति वा" विसृतानि विस्तीर्णानि सन्ति वासराणीति उच्यन्ते। यथा तानि सूर्य्यः वर्द्धयति मन्दगतित्वात्, एवमस्माकं त्वमायुः प्रवर्द्धयेत्याशीः॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"कुरुतन (८)"—इति। "अनर्थका उपजना भवन्ति" य एवार्थः कुरुतेत्युक्ते भवति, स एव कुरुतनेति, नात्र नकारस्यार्थोऽधिकोऽस्ति। अधुना एवमुक्त्वा अन्यान्यपि दर्शयति,—कर्त्तनहन्तनयातनेति"।

"शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः। शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्त्तनास्मे"—इति (य० वा० सं० १२, ३१)।

अग्निचयने क्षेत्रकर्षणे विनियुक्ता। त्रिष्टुप्। 'शुनं' सुफालाः' सुखं शोभनाः फालाः, 'वितुदन्तु' विकृषन्तु 'भूमिम्'। सुखं 'कीनाशाः' भूमिं कीणनाशाः, खिलोत्कर्त्तारः, कर्षुकाः, 'अभियन्तु' 'वाहैः' अनडुद्भिः। अयं तावदेवं कृषीवलः कृषिं करोतु, युवामपि हे 'शुनासीरौ!' 'हविषा' उदकेन 'तोशमानौ' निघ्नन्तौ भूमिं 'सुपिप्पलाः' सुफलाः, एताः 'ओषधीः' 'कर्त्तन' कुरुत, 'अस्मे' अस्मभ्यमित्यर्थः॥

"यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति॥ द्रुहः पाशान् प्रति संमुचीष्ट तपिष्ठेन हन्मना हन्तना तम्"—इति (ऋ० सं० ५, ४, ३०, २)॥

वसिष्ठस्येयमार्षम्। सान्तपनस्य चरोः याज्यैषा। 'यः' 'नः' अस्माकं हे 'मरुतः!' 'दुर्हृणायुः' पापक्रोधः, 'तिरश्चित्तानि' अन्तर्हितानि चित्तानि कृत्वा सम्मोह्य ततो हन्तुमस्मानिच्छति। हे 'वसवः' सर्वभूतवासयितारः! तस्येदंलक्षणस्य 'द्रुहः' अस्मद्द्रोग्धुः उपरि 'पाशान्' 'प्रति संमुचीष्ट' प्रतिसम्मोचयत। पाशैः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं बद्ध्वा 'तपिष्ठेन' तापयितृतमेन हन्मना' हननेन, वधेन 'हन्तना' हन्तेत्यर्थः ॥

"कोऽन्वत्र मरुतो मामहे वः प्रयातन सखीँरच्छा सखायः। मन्मानि चित्रा अपि वातयन्त एषां भूत नवेदा म ऋतानाम् ॥" —इति (ऋ० सं० २, ३, २६, ३)। इन्द्रागस्त्यमरुतां सम्वादः। कयाशुभीयं सूक्तम्। तत्रेयमगस्त्यस्यार्षम्। महाव्रते व्यूढस्य च दशरात्रस्य सप्तमेऽहनि सूक्तं शस्यते। हे 'मरुतः!' कोऽन्यः युष्मानेवमेतस्मिन् जगति 'मामहे' पुनः पुनः महयति, पूजयति? यथा अहं, तथा न कश्चिदित्यभिप्रायः यत एवमतो ब्रवीमि,—अस्मान् एव 'सखीन्' आभिमुख्येन 'प्रयातन, प्रयात, हे 'सखायः!'। किञ्च, 'मन्मानि' मननानि स्वानि चेतांसि 'चित्राः' चित्राणि, अस्मान् प्रति 'अपि वातयन्तः' निगमयन्तः 'एषाम्' 'ऋतानां' यज्ञानां प्रापयितारः 'भूत' भवत, हे 'नवेदाः' मेधाविनः! इत्यर्थः ॥

"जठरम् (६)"—इति। एतदनवगमम्। "उदरं भवति"—इति अभिधेयवचनम्। "जग्धम्" भुक्तमन्नम् "अस्मिन्" अवस्थितं "ध्रियते" इति जठरम्। अन्नं "वा" जग्धमस्मिन् "धीयते" जग्धधानं वा स्यात्। एते शब्दसमाधी ॥ ७ ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आसिञ्च स्वजठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुतानाम् ॥ मरुत्वानिन्द्रः मरुद्भिस्तद्वान् वृषभो वर्षितापां रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्वन्नं मदाय मदनीयाय जैत्रायासिञ्च स्वजठरे मधुन ऊर्मिं मधु सोममित्यौपमिकं माद्यतेरिदमपीतरन्मध्वे तस्मादेव त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ॥ ८ ॥

इति चतुर्थाध्यायस्य प्रथमः पादः ॥ ४, १ ॥

"मरुत्वाँ इन्द्र"—इति निगमः। "मरुत्वाँ इन्द्र वृषभः०—० सुतानाम्"—इति (ऋ० सं० ३, ३, ११, १)। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। महाव्रते पृष्ठ्यस्य चतुर्थेऽहनि शस्यते। मरुत्संयुक्तो भूत्वा पिब। हे 'इन्द्र !' यः त्वं 'वृषभः' वर्षिता, 'अपाम्' इत्यध्याहृतं भाष्यकारेण वृषभसम्बन्धात्। यः त्वामेवं कर्मकारी तं त्वां ब्रवीमि,—'रणाय' "रमणीयाय संग्रामाय" रमणीयं संग्रामं करिष्यामीति एतमर्थमुद्दिश्य "पिब" एतं "सोमम्" अस्मत्प्रदत्तम्। 'अनुष्वधं स्वधेति अन्ननाम, सवनीयपुरोडाशाद्यभिप्रायेण। 'अनुष्वधम्' "अन्वन्नम्"। 'मदाय' "मदनीयाय" पानाय, युष्मदर्थमस्माभिः संस्कृतम्। 'जैत्राय'—इत्यध्याहृतं भाष्यकारेण, द्विविधो हि मदः,—सम्मोहकरो जैत्रश्च, तयोः जैत्र इष्टः संग्रामे। कथं च पुनः पिब ?—किमीषत् ? नेत्युच्यते,—'आसिञ्च स्वजठरे' ये 'मध्वः' "मधुनः"। "मधुसोममिति, औपमिकम्"—इत्येतदुक्तं सोमस्य मधुत्वम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"माद्यतेः" धातोः। तृप्तिर्हि समाना, सोमेन मध्वा चेत्यौपमिकत्वम्। "इदमपीतरत् मधु" माक्षिकम् "एतस्मादेव" माद्यतेः। यत्तु सोमस्योपचारत्वेन, तस्मात् माध्वीकम्। 'ऊर्मिः' सङ्घातः। तावत् तं सोममासिञ्च स्वजठरे, यावता जैत्रो मद उपजायते। कस्मात् पुनरेवं ब्रवीमि? इतः,—यस्मात् 'त्वं राजासि प्रदिवः सुतानाम्' त्वमेव 'राजा' ईश्वरः "पूर्वेष्वपि अहःसु सुतानाम्" अभिषुतानाम्, न केवलमाधुनिकानाम्, एवं ते समुचितं सोमपानमित्यभिप्रायः॥ ८॥

इति निरुक्तवृत्तौ नवमाध्यायस्य ( चतुर्थाध्यायस्य )

प्रथमः पादः॥ ४, १॥

—०—

## द्वितीयः पादः

तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा॥ १(९)॥

"तितउ (१०)" इति। एतदनवगतम्। "परिपवनं भवति"—इति अभिधेयवचनम्। सक्तवः परिपूयन्ते येन द्रव्येण, तत् परिपवनमुच्यते। ततेन चर्मणा नद्धं 'तितउ'। तुन्नैर्वा छिद्रैः तद्वत् 'तितउ'। तिलमात्राणि वा तुन्नानि तस्मिन्निति 'तितउ' यथासम्भवमेताः शब्दसमाधयः॥ १ ( ९ )॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥ सक्तुमिव परिपवनेन पुनन्तः सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा स्याद्विपरीतस्य विकसितो भवति यत्र धीरा मनसा वाचमकृषत प्रज्ञानं धीराः प्रज्ञानवन्तो ध्यानवन्तस्तत्र सखायः सख्यानि सञ्जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि भद्रम्भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा लक्ष्मीर्लाभाद्वा लक्षणाद्वा (लप्स्यनाद्वा) लञ्छनाद्वा लषतेर्वा स्यात् प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः॥ २ (१०)॥

निगमः,—"सक्तुमिव तितउना"—इति। विद्यासूक्ते बृहस्पतेरार्षम्। "सक्तुः सचतेः" स हि सूक्ष्मत्वात् सचति संश्लिष्यति अङ्गे। ततः "दुर्धावो भवति"—इति उपपत्तिः। दुःखं धाव्यते प्रक्षाल्यत इत्यर्थः। "कसतेः वा स्यात् विपरीतस्य" स "विकसितः" विपुष्पितः "भवति":। यथा सक्तुं कश्चित् परिपवनेन पुनाति, एवं "मनसा" परिपवनस्थानीयेन परिपूय विनिश्चित्य शब्दार्थं न्याययुक्तां "वाचं" "यत्र" यस्मिन् समाजे यज्ञे वा "धीराः" धीमन्तः, मेधाविनः 'अक्रत' "अकृषत" कुर्वन्ती-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्यर्थः। अत्र केचित् अक्रुषत प्रज्ञानमित्यभिधीयते, प्रज्ञानार्थत्वात् वाचः। तत्र किम्? इति "तत्र सखायः" समानख्यानाः। समानख्यानानामेव समानेषु शास्त्रेषु कृतश्रमाणाम्, तद्यथा,—वैयाकरणानां वैयाकरणा एव, नैरुक्तानां नैरुक्ता एव "सख्यानि" सखिभावान् "सञ्जानते" विज्ञानानि सञ्जानते, इतरेतरस्य यो विज्ञानप्रकर्षः, तं जानते। किङ्कारणम्? यस्मात् "भद्रा" भन्दनीया "एषां" "लक्ष्मीः" विज्ञानाख्या "निहिताधिवाचि" वाचः 'अधि' उपरि, 'निहिता' अवस्थापिता। तया लक्ष्म्या इतरेतरस्य विज्ञानश्रमं जानते, इतरो ह्यविद्वान् किं विज्ञास्यत इत्यभिप्रायः॥

"भद्रम्"। "भगेन व्याख्यातम्" स्त्रीभगः तथा स्यात्, भजतेः इति। "भजनीयम्" इति। "भूतानाम्" "अभिद्रवणीयम्" अभिगमनीयमित्यर्थः। "भवद्रमयतीति वा" यस्य हि तद् भवति, स रमते। "भाजनवद्वा" सन्ति हि कल्याणरूपाः पुरुषाः, ये यस्य भाजनम्, तैः तद्वत्॥

"लक्ष्मीः"। "लाभाद्वा" लक्ष्मीवन्त एव लभन्ते, नेतरे। "आ लक्षणाद्वा" आलक्षित एव हि लक्ष्मीवान्। "लञ्छनाद्वा" तया हि लञ्छित इव भवति। "लषतेः (भू० उ०) वा स्यात्, प्रेप्साकर्मणः" सर्व एव हि तामभिलषन्ति। "लग्यतेः (भू० प०) वा स्यात्, आश्लेषकर्मणः" आश्लिष्य इव हि सा वर्त्तते पुरुषम्। "लज्जतेः (तु० आ०) वा स्यात्, अश्लाघाकर्मणः" ये हि लक्ष्मीवन्तो भवन्ति, ते स्वयमात्मानं न श्लाघन्ते॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"शिप्रे (११)"—इति। "एतत् उपरिष्टात् व्याख्यास्यामः" —"शिप्रे हनू नासिके वा"—इति, अत्र हि एतन्निगमप्रसक्तमायास्यतीति लाघवार्थमुत्क्षिप्तम् ॥ २ (१०) ॥

तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं सञ्जभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासावयुक्त हरणानादित्यरश्मीन् हरितोऽश्वानिति वाथरात्रौ वासस्तनुते सिमस्मै वेसरमहरवयुवती सर्वस्मादपि वोपमार्थे स्याद्रात्रीव वासस्तनुत इति तथापि निगमो भवति पुनः समव्यद्विततं वयन्ती। समनात्सीत् ॥ ३ (११) ॥

"मध्या (१२)"—इति। एतदनवगतम्। "मध्ये"—इत्यवगमः। "तत् सूर्य्यस्य देवत्वं ०—० सिमस्मै"—इति निगमः (ऋ० सं० १, ८, ७, ४)। आङ्गिरसस्य कुत्सस्येयमार्षम्! त्रिष्टुप्। सौर्य्यस्य पशोः षडर्चे वपाया याज्या, सूत्रितञ्च —"चित्रन्देवानामिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः सौर्य्यस्योपांशु (आ० ३, ८)" इति। 'तत्' अहं 'सूर्य्यस्य' भगवतः 'देवत्वं' देवताभावं, 'तन्महित्वं तच्च महत्त्वं माहाभाग्यं 'मन्ये' जाने। तत् किम्? इति,—'मध्या' "मध्ये" "यत्" "कर्मणां


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रियमाणानाम्” अनेकेषाम् अवगणय्य सर्वान् कर्मकर्तॄन् 'विततं' तेषां “विततम्” एतत् प्रकाशजालम्। एवमतिमहत्। महतापि कालेन तत् दुरुपसंहारमन्यैर्यदेकेन मुहूर्त्तेनायत्नेनैव भगवता सूर्य्येण “संह्रियते” तत् अस्य देवत्वं तच्च महत्त्वमहं मन्ये। किञ्च, “यदासौ भगवान् सूर्य्यः, “अयुक्त” युनक्ति, 'हरितः' “हरणान्” रसहरणान् “आदित्यरश्मीन्” आत्मन्यस्तं गच्छन् 'सधस्थात्' पृथिवीलोकादाकृष्य। पृथिवी हि तेषां रसादानार्थं सहस्थानम्। इतो हि ते सर्व एव रसानाददते। 'आत' अथेत्यर्थः। अथ तदैव उपसंहृतसर्वरश्मिजाले भगवति सूर्य्ये, 'रात्रिः' 'वासः' “वेसरमहरवयुवती” अवमिश्रयन्ती 'सिमस्मै' सिमस्मात्, सर्वस्मात् लोकात् अहरपकृष्य, स तमः 'तनुते'। तदेवमेतदपि सूर्य्यस्यैव माहाभाग्यं यदस्य सन्निधौ तमो नश्यति, यश्चानेनोत्सृष्टो देशः स तमसा छाद्यत इत्यभिप्रायः। “हरितोऽश्वानिति वा” ऐतिहासिकपक्षमतेन॥

“अपि वोपमार्थे स्यात्, रात्रीव वासस्तनुत इति” वास इव रात्री तमः तनुत इत्यर्थः। पूर्वत्र वेसरमहरवयुवती तमस्तनुत इति नास्त्युपमा, इह पुनर्वास इव तमस्तनुत इत्येवमुपमा॥

यथा च उपमार्थोऽपि युज्यते, “तथा” च “निगमः” “अपि” अयं भवति”—“पुनः समव्यद् विततं वयन्ती मध्या कर्त्तोर्न्यधाच्छक्म धीरः। उत्संहायास्थाद् व्यृ१तूँरदर्धररमतिः सविता देव आगात्॥” (ऋ० सं० २, ८, २, ४)। गृत्समदस्ये-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यमार्षम्। सावित्री। त्रिष्टुप्। पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रे शस्यते तृतीयसवने। "पुनः समव्यद्विततं वयन्ती"। "समनात्सीत्"—इति निर्वचनम्। समवेष्टयदित्यर्थः। यथा योषित् काचिद् वासो वयन्ती, पुनः संवेष्टयत्यस्तमयकाले, पुनश्च वितनोत्यादित्य उदिते, एवमियं रात्रिः पुनरेव तमः संवेष्टयति, योषिदिव वासो वयन्ती। कदा पुनः संवेष्टयति? यदा 'मध्या' मध्ये 'कर्त्तोः' कर्मणां क्रियमाणानां लौकिकवैदिकानां 'विततम्' एतद्रश्मिजालम्, 'शक्म' स्वात्मप्रसवादपत्यभूतं 'न्यधात्' न्यदधात्, नीचैर्धत्ते लोकानां प्रकाशनाय। अथवा शक्मेति कर्मनाम स्यात्, यदा स्वं प्रकाशं पुनः कर्म निधत्ते, निदधाति, उदेति 'धीरः' धीमानादित्यः, तदा अहनि अभ्युपस्थिते पुनः संवेष्टयति रात्रिस्तम इति। अस्तमयं प्रति पुनर्वास इव तनोतीति। एवमेतस्मिन्नपि मन्त्रे सामर्थ्यादसत्युपमाशब्दे वाससा तम उपमीयते। यथेह तथा पूर्वस्मिन्नपि, निगमेऽपीत्येवमेके मन्यन्ते। अपरे पुनः अपि वोपमार्थे स्यादित्यत्रैवं वर्णयन्ति,—रात्रीव वासस्तनुत इत्यत्र वासःशब्दोऽहःशब्दपर्य्यायवाची, तस्योक्ता व्युत्पत्तिः वेसरमहरिति। सा रात्रिः वासस्तनुते, अहस्तनुत इत्यर्थः। रात्रिप्रान्ते हि शुक्लमहर्लक्ष्यते, तेन ज्ञायते रात्र्यैवेदं ततमिति। एवमुपमार्थत्वमेके मन्यन्ते,—यदा वायमर्थः, तदा "पुनः समव्यद्विततं वयन्ती (ऋ० सं० २, ८, २, ४)"—इत्यत्र पुनः समवेष्टयदहो रात्रिः, विततमिव वासो वयन्ती। कदा? यदा मध्ये कर्मणां 'न्यधात्' निदधाति।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्तं गच्छन् आदित्यः स्वमण्डले 'शक्म' रश्मिजालं यदा च 'उदस्थात्' उत्तिष्ठति, स्वरश्मीनुपसंहृत्य 'व्यधात्' विदधाति 'ऋतून्' अहोरात्रलक्षणान्। यदा एवम् 'एषः' 'सविता देवः' 'अलमतिः' पर्य्याप्तमतिः, 'आगात्' आगच्छति। तदा 'रात्रिः तनुते' 'वासः' अहर्लक्षणम्, 'पुनः' 'संवेष्टयतीत्येवं मन्यन्ते। यदत्रार्थाविरोधि तत् प्रतिपत्तव्यम्॥ ३ (११)॥

इन्द्रे॑ण॒ सं हि दृक्ष॑से सञ्जग्मा॒नो अबि॑भ्युषा। म॒न्दू स॑मा॒नव॑र्चसा॥ इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्॥ ४ (१२)॥

"मन्दू (१३)"—इति। एतदनवगतम्। "मदिष्णू, मन्दुनेति वा" शब्दसमाधी। "इन्द्रे॑ण॒ सं हि"—इति निगमः। मधुच्छन्दस इदमार्षम्। महाव्रते महदुक्थे तृचाशीतिषु शस्यते, सात्रिकेषु चाहःसु स्तोमातिवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे इन्द्र उच्यते। हे भगवन्! इन्द्र! त्वं 'इन्द्रेण' ईश्वरेण, दीप्तेन वा मरुद्गणेन, नित्यमेव "सङ्गच्छमानः" 'संदृक्षसे' "सन्दृश्यसे"। 'अबिभ्युषा' अभयवता, "गणेन"—इत्यध्याहारः। तौ च "युवां" मरुद्गणः त्वं च, एकत्र सङ्गतौ। "मदिष्णू" हर्षशीलौ, नित्यप्रमुदितावित्यर्थः। 'समानवर्चसौ' च समानदीप्ती इत्यर्थः। एवं "म॒न्दू स॑मा॒नव॑र्चसा"—इत्येतेन द्विवचनेन

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः। "अपि वा" एवमन्यथा "स्यात्"। मन्दु इत्यस्य तृतीयैकवचनान्तत्वेन विपरिणामः, एवञ्च सति मरुद्गणविशेषणमेतद्भवति। कथम्? "मन्दुना" मरुद्गणेन, इन्द्र! सन्दृश्यसे सङ्गच्छमानः। "समानवर्चसा इति" एतत् पदं मन्दुनेति "एतेन" पदेन "व्याख्यातम्" यथैव हि मन्दू इत्येतत् द्विवचनमेकवचनं वा, एवमेतदपि,—समानवर्चसाविन्द्रमरुद्गणाविति द्विवचनमथवा मन्दुना समानवर्चसा च मरुद्गणेन इत्येवं तृतीयैकवचनम्। अपि वा एवं मरुद्गण उच्यते,—त्वमिहेन्द्रेण सङ्गच्छमानो नित्यमेव सन्दृश्यस इति। समानमन्यत् ॥ ८ (१२) ॥

ईर्मान्तासः सिलिकमध्यमासः संशूरणासो दिव्यासो अत्याः। हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः॥ ईर्मान्ताः समीरितान्ताः (सुसमीरितान्ताः) पृथ्वन्ता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वाऽपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठतीदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति संशूरणासः (दिव्यासो अत्याः) शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः। हंसा इव श्रेणिशो यतन्ते। हंसा हन्तेर्घ्नन्त्यध्वानं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

( श्रेणिश इति ) श्रेणिः श्रयतेः समाश्रिता भवन्ति यदाक्षिषुर्यदापन् दिव्यमज्ममजनि माजिमश्वा अस्त्यादित्यस्तुतिरश्वस्यादित्यादश्वो निस्तष्ट इति। सूरादश्वं वसवो निरतष्टेत्यपि निगमो भवति ॥ ५ (१३) ॥

"ईर्मान्तासः (१४)"—इति। एतदनवगतम्। "समीरितान्ताः"—"पृथ्वन्ता वा" इति यथासम्भवं शब्दसमाधी। "ईर्मान्तासः"—इति निगमः। दीर्घतमस आर्षम्। "यमेन दत्तम्"--इति इयञ्च, द्वे अप्येते अश्वस्तोमीये सूक्ते, तेन चाश्वः स्तूयतेऽश्वमेधे, आदित्यस्य रथे येऽश्वा युक्तास्त उच्यन्ते ईर्मान्तासः, तेषां सप्तानां येऽश्वाश्चत्वारः, ते "समीरितान्ताः" विक्षिप्तान्ताः, प्रसृतान्ताः, प्रविरला इत्यर्थः। "पृथ्वन्ता वा" तेषामेवाश्वानां पृथवोऽन्ताः, पृथूरस्काः, पृथुजघना वा इत्यर्थः। "सिलिकमध्यमाः, संसृतमध्यमाः" संश्लिष्टमध्यमा इत्यर्थः। तेषां हि सप्तानां ये मध्यमास्त्रयः इतरेतरमुत्पीड्य संश्लेषेणावस्थिताः। अथवा पृथुजघनोरस्कानां सतां मध्यमाः शरीरप्रदेशाः, सप्तानामपि सश्लिष्टाः संलग्नास्तनवः, निरुदरास्तेऽश्वा इत्यर्थः। तथापि हि स्तुतिरुपपद्यत एव। "शीर्षमध्यमा वा" सिलिकमध्यमा वा। एवमपि हि शब्दे सारूप्यमस्ति, यो हि तेषां सप्तानां मध्यमः, स शिरोभूतः प्रधान इत्यर्थः। "अपि वा" एवमन्यथा स्यात्। "शिर आदित्यः" एव "भवति" सर्वभूत प्राधान्यात्। "मूर्द्धा, राजेति वा अहमेतमुपासे इति ह विज्ञा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यते"। तस्माच्चासावनुप्रविश्य प्राणभावेन सर्वभूतानि "शेते" आस्ते, तस्मात् सर्वभूताश्रयणात् शिर आदित्यः। स चैतेषामश्वानां "मध्ये तिष्ठति" शीर्षमध्यमास्त एते शीर्षमध्यमा इत्युक्ताः सन्तः सिलिकमध्यमा इत्युच्यन्ते। "इदमपीतरच्छिर एतस्मादेव"—इति प्रासङ्गिकम्। "समाश्रितानि" हि "एतत्" उत्तमाङ्गम् "इन्द्रियाणि" चक्षुरादीनि "भवन्ति" इति शिर उपपत्तिः। 'संशूरणासः' सङ्गताः शूरेण भगवतादित्येन संशूरणाः। "शूरः शवतेर्गतिकर्मणः" स हि परानभिमुखो गच्छत्येव, न पर्य्यावर्त्तते। 'दिव्यासः' ते हि "दिव्याः" दिविजाताः, 'अत्याः' "अतनाः" ते हि अतन्त्येव, मुहूर्त्तमपि नावतिष्ठन्ते। य एवंलक्षणा अश्वास्ते किं कुर्वन्ति? इति। उच्यते,—'हंसा इव श्रेणिशो यतन्ते' हंसा इव श्रेणीकृताः पङ्क्तीकृताः यतन्ते गच्छन्ति। "हंसा हन्तेः" ते हि "घ्नन्त्यध्वानम्"। कदा पुनरेवं यतन्ते? "यदाक्षिषुः" 'यत्' "यदा" यस्मिन् काले 'आक्षिषुः' 'आपन्' आप्नुवन्ति। किम्? 'दिव्यम्' 'अज्मम्' "अजनि"। अज्यतेऽस्यां गम्यत इति अजनिः, वाहिका, स्वर्गपथ इत्यर्थः। यदा ते आप्नुवन्ति—उदयादारभ्य यावदस्तमिति, तदैवं यतन्ते। के पुनस्ते? इत्युच्यते—'अश्वाः'। एवमेतानि ईर्मान्तास इत्येवमादीनि अश्वविशेषणानि, अश्वशब्देन समानविभक्त्यन्तत्वात्। आत्मैवैषां रथो भवत्यात्माश्वा इत्येवं प्रक्रमेण सूर्य्यदैवत एष मन्त्र उक्तः। स पुनरयमश्वस्तुतौ विनियुक्तस्तदसमञ्जसमिति मन्यमानो भाष्यकारः प्रतिसमाधित्सुराह,—"अस्त्यादित्यस्तु-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तिरश्वस्य" इति, अश्वोऽपि ह्यादित्यात्मना स्तूयत इत्यर्थः। आह,—कयोपपत्त्या ? इति। उच्यते, "आदित्यादश्वो निस्तष्ट इति"—अनयोपपत्त्या सूर्य्यात्मना अश्वः स्तूयते। आह,—कुत एतत्सूरादश्वो निस्तष्ट ? इति। उच्यते,—"सूरादश्वं वसवो निरतष्ट—इत्यपि निगमो भवति"। "यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट॥"—इति ( ऋ० सं० २, ३, ११, २ )। 'यमेन' 'एनम्' अस्माकं 'दत्तम्' अश्वम् 'त्रितः' त्रिस्थानो वायुः 'आयुनक्' युनक्ति। यत्रायं योक्तव्यः, तत्र वायुना युक्तस्येन्द्रेणाधिष्ठितस्य 'अस्य' 'गन्धर्वः' गन्धर्वराजः 'रशनामगृभ्णात्' नियमेन रज्जुं गृह्णाति। कुतः पुनरयमश्वः ? इत्युच्यते,—'सूरात्' सूर्य्यादेतमेवंलक्षणम् 'अश्वं' 'वसवः' 'निरतष्ट' निस्तष्टवन्तः। एवमेतस्मिन् मन्त्रे सूर्य्यप्रभवोऽश्व इति स्तूयते। "कारणाच्च कार्य्यमनन्यत्"—इत्युपपद्यते सौर्य्येण मन्त्रेणाश्वस्य स्तुतिरिति॥ ५ (१३)॥

कायमानो वना त्वं यन्मातॄरजगन्नपः। न तत्ते अग्ने प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभवः॥ कायमानश्चायमानः कामयमान इति वा वनानि त्वं यन्मातॄरपोऽगम उपशाम्यन् न तत्ते अग्ने प्रमृष्यते निवर्त्तनं दूरे यत् सन्निह भवसि जायमानः। लोधं नयन्ति पशु मन्यमानाः।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लुब्धमृषिं नयन्ति पशुं मन्यमानाः। शीरं पावकशोचिषम्। पावकदीप्तिम्। अनुशायिनमिति वाशिनमिति वा॥ ६ (१४)॥

"कायमानः (१५)"—इति। एतदनवगतम्। "चायमानः"—इत्यवगमः, "कामयमान इति वा"। "कायमानो वना त्वम्"—इति निगमः (ऋ० सं० ३, १, ५, २)। विश्वामित्रस्येयमार्षम्। बृहती। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! अग्ने! 'कायमानः' "चायमानः" पश्यन्नित्यर्थः। अथवा "कामयमानः"। किम्? स्वां योनिम्। कतमाम्? 'वना' "वनानि" दारूणि। दारुभ्योऽग्निर्जायते, तदेतत् प्रसिद्धमेवोक्तम्, यदा चाग्निरनुगच्छति अरणी वावगच्छति। 'मातृः' वा सर्वभूतनिर्मात्रीः 'अपः' सापि योनिरेवाग्नेः। "आपो वा अग्नेर्योनिः,—इति ह विज्ञायते"। अनयोर्योन्योरन्तरां योनिं 'यत्' यदा 'अजगन्' "अगमः" "त्वम्"। कदा पुनरगमः? "उपशाम्यन्"—इत्यध्याहृतं भाष्यकारेण, अनुगच्छन्नित्यर्थः। तस्य तवैवमनुगच्छतः किम्? इति। उच्यते,—'न' 'तत्' 'ते' 'अग्ने'! 'प्रमृषे' 'निवर्त्तनम्'। "न प्रमृष्यते" न प्रमृज्यते निवर्त्तनं', वर्त्म, मार्गो न लुप्यत इत्यर्थः। कथं गम्यते न प्रसृज्यते मार्गः? "इति। 'दूरे' अपि 'सन्' अदृश्योऽपि भूत्वा यस्मात् "इह" पुन "भवसि" एव। कदा? "जायमानः" "यत्" यदा अद्भ्यो जायसे वैद्युतात्मना, यदा वा अरणिभ्यां जायसे मथ्यमानः, तदा॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"न सायकस्य चिकिते जनासो लोधं नयन्ति पशु मन्यमानाः। नावाजिनं वाजिना हासयन्ति न गर्दभं पुरो अश्वान् नयन्ति" इति (ऋ० सं० ३, ३, २३, ३)। "लोधम् (१६)"—इति। एतदनवगतम्। "लुब्धम्"—इत्यवगमः। यस्मिन् निगमे एष शब्दः सा वसिष्ठद्वेषिणी ऋक्। अहं च कापिष्ठलो वासिष्ठः। यतस्तान् निर्ब्रवीमीति॥

"शीरम् (१७)"—इति। एतदनवगतम्। अग्निरभिधेयः। "अनुशायिनमिति वा"—इति, अनुप्रविश्य सर्वभूतानि शेते इत्यनुशायी, तमनुशायिनम्। अश्नोति व्याप्नोति वा सर्वभूतानीति "आशिनम्"। "शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा-दीदाय दीर्घश्रुत्तमः॥"—इति निगमः (ऋ० सं० ६, ७, ११, १)। भार्गवस्य प्रयोगस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। 'शीरम्' अनुशायिनं व्यापिनं वा अग्निं स्तौमि। "पावकशोचिषम्" पावयित्री यस्य शोचिर्दीप्तिः, तं पावकशोचिषम्। किञ्च 'ज्येष्ठः' श्रेष्ठः, 'यः' प्रधानः 'दमेषु' यज्ञगृहेषु 'आदीदाय आदीप्यते, परिचर्य्यमाणोऽग्निहोत्रिभिः। किञ्च 'दीर्घश्रुत्तमः' यः, दीर्घश्रोतृभ्यः यो दीर्घश्रुत्तमः। तमग्निं स्तौमि॥ ६ (१४)॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके। बभ्रू यामेषु शोभेते॥ कनीनके कन्यके कन्या कमनीया भवति क्वेयं नेतेव्येति वा (कमनेनानीयत

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति वा ) कनतेर्वा स्यात्कान्तिकर्मणः कन्ययोरधिष्ठान-प्रवचनानि सप्तम्या एकवचनानीति क्षाकपूणिर्विद्धयोर्दारु-पाद्धोर्दारु दृणातेर्वा द्रूणातेर्वा तस्मादेव द्रु नवे नवजाते अर्भके अवृद्धे ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते बभ्रुवोरश्वयोः संस्तव इदश्च मेऽदादिदश्च मेऽदादित्यृषिः प्रसंख्यायाह। सुवास्त्वा अधि तुग्वनि। सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति। कुविन्नंसन्ते मरुतः पुनर्नः। पुनर्नो नमन्ते मरुतो नसत इत्युपरिष्टाद् व्याख्यास्यामः। ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम्। ये ते मदा आहननवन्तो वञ्चनवन्त-स्तैरिन्द्रं चोदय दनाय मघम् ॥ ७ (१५) ॥

"विद्रधे (१८), द्रुपदे (१९)"—इत्येते पदे एकनिगमे। द्वे अप्यनवगते, पक्षेण चानेकार्थे। 'विद्रधे' विद्धे, 'द्रुपदे' द्रुममये पदे इत्यवगमः। दारुपादौ वा एताभ्यां शब्दाभ्यां विशेष्येते। कन्ययोर्वा पादपीठप्रवचने सप्तम्येकवचनान्ते एते। द्वयोरपि पदयोरेक एव निगमः,—"कनीनकेव विद्रधे०—०शोभेते"—इति (ऋ० सं० २, ६, ३०, ७)। वामदेवस्यार्षम्। "कन्या कमनीया भवति" सर्व एव हि तां प्रार्थयन्त एव। अथवा "क्वेयं नेतव्येति वा" दानायेत्येवं तां प्रति पिता चिन्तयतीति कन्या। "कमने-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नानीयत इति वा"। "कनतेर्वा स्यात् कान्तिकर्मणः" "कनति (१७)' कानिषत् (१८)"—इति कान्तिकर्मसु पठितम्। 'इव' इति उपमायाम्। 'विद्रधे' 'नवे' 'द्रुपदे' 'अर्भके'—इत्येतानि चत्वारि पदानि "कन्ययोरधिष्ठानप्रवचनानि" "सप्तम्या एकवचनानीति" एवं "शाकपूणिः" आचार्य्यो मन्यते। एकस्मिन् दारुमये पाद-पीठेऽस्मिन् समधिरूढेषु पाकाख्येषु अधिष्ठानेषु अधिरूढे 'शोभेते' यथैवं 'वभ्रू' वभ्रूवर्णे अश्वे 'यामेषु' आजिस्थानेषु यमनस्थानेषु, कन्यके, शालभञ्जिके वा। तदेतैश्चतुर्भिः पादैरुच्यत इति शाकपूणिराचार्य्यो मन्यते। यास्कस्तु "विद्रधोः" विकुषि-ताधोभागयोः "दारुपाद्वोः" अधिरूढयोः कन्ययोरभिधानपदान्य-भिधायकान्येतानि द्विवचनानीति मन्यते। ताभ्यां ह्यश्विन्योः खुराकारत्वेन सारूप्यमस्तीत्येवमुपादानम्। दारुपाद्वोरित्ये-तस्मिन् व्याख्यानप्रसक्ते पदे विग्रहप्रसक्तो दारुशब्दो निरुच्यते,— "दारु द्वणातेर्वा" विदारणार्थस्य (क्र्या० प०)। "द्रूणातेर्वा" हिंसार्थस्य तस्मादेव धातुद्वयादन्यतरस्य "द्रु"—इत्येतदभिधानं भवति। द्रुपदे इत्येतदपेक्ष्य "तस्मादेव द्रु"—इत्येतदुक्तम्, द्रुम इत्यर्थः। "नवे नवजाते"। "अर्भके अवृद्धे" अल्पके इत्यर्थः। "ते" कन्यके एवम्प्रकारेषु "तदधिष्ठानेषु" तेषु पादुकाख्येषु अधिष्ठानेषु अधिरूढे "शोभेते" यथा "एवं" "वभ्रू" वभ्रूवर्णे अश्वे "यामेषु" आजिस्थानेषु यमनस्थानेषु वा वन्धनस्थानेषु मन्दुराख्येषु, वर्त्तमाने शोभेते। ते एवमेव "वभ्र्वोरश्वयोः संस्तवः" ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"तुग्वनि (२०)"—इति एतदनवगतम्। "तूर्णमेतदायन्ति"—इति शब्दसमाधिः। "तीर्थम्" अभिधेयम्। "सुवास्त्वा अधि तुग्वनि"—इति निगमः (ऋ० सं० ६, १, ३५, ७)। अस्य ऋक्पादस्य ऋक्छेषापेक्षो निर्णयः। सर्वस्या अपि च तस्या ऋचो यस्यामयं पादः, तस्या या आद्यान्या आधस्त्या ऋक्, तदपेक्षो निर्णयो यतः, अतस्तस्या ऋचः आधस्त्यायाः सङ्क्षिप्यार्थमाह भाष्यकारः,—'इदञ्च मेऽदादिदञ्च मेऽदादित्यृषः प्रसङ्ख्यायाह"—इति। इदञ्च द्रव्यजातं, मम दत्तवानसौ राजेत्येवं, प्रसङ्ख्याय', परिसङ्ख्यानं कृत्वा, ऋषिराह उक्तवानित्यर्थः। कतमा पुनरसौ आधस्त्या ऋक्, यथायमर्थः सङ्क्षिप्यते? इति। उच्यते,—"अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्। मंहिष्ठो अर्य्यः सत्पतिः" (ऋ० सं० ६, १, ३५; ६)। सोभरेः काण्वस्येयमार्षम्, परा च, दानप्रशंसा। 'यः' 'अदात्' 'मे' मम, 'पौरुकुत्स्यः' बहुशत्रुकर्त्तितुः पुत्रः 'त्रसदस्यु' दस्युत्रासनः। किमदात्? 'पञ्चाशतं वधूनाम्' पञ्चाशतं वोढव्यानां कन्यानाम्। 'मंहिष्ठः' पूज्यतरः। 'अर्य्यः' ईश्वरः। 'सत्पतिः' च सतां पालयिता च। एवंलक्षणः पौरुकुत्स्यः त्रसदस्युः मम दत्तवान् पञ्चाशतं वधूनाम्। आह किमेतदेवादात्? नेति। उच्यते,—इदञ्च यदुक्तम् उत्तरञ्च यद् वक्ष्यते। कतरा पुनरसावुत्तरा ऋक्? इति। उच्यते,—"उ त मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि। तिसृणां सप्ततीनां श्यावः प्रणेता भुवद् वसुर्दियानां पतिः"—(ऋ० सं० ६, १, ३५, ७)। अप्येतत्,—यदुक्तम्,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अपि च यदेतत् वक्ष्यमाणमिति 'उत'—शब्द एवमुभयं सम्भावयति। 'मे' मम 'प्रयियोः' (प्रगम्यते येन, तत् प्रयियुः, धनमश्वादि, तस्य प्रयियोः) धनस्य, वह्वदात्। ताभिः कन्याभिः सह 'वयियोः' (ऊयत इति वयियुः वस्त्रादि, तस्य) च वह्वदात्। 'तिसृणां सप्ततीनां' गवाम्। 'श्यावः' श्यामवर्णः कृषः, श्यामवर्णानां 'प्रणेता' प्रकर्षेण नेता अग्रतोगामी। 'भुवद्वसुः' भावयिता वसूनाम्। 'प्रशस्तः' पूजितलक्षणः। 'दियानां' दानार्हाणाम्, देया याः तासां पतिः। ताश्च गा एतत्सङ्ख्यायुक्ताः, एतद्गुणयुक्ताश्च मह्यमदात्। क पुनरसावदात्? 'सुवास्त्वा' सुष्ठ निवासाया नद्याः 'अधि तुग्वनि' तीर्थेऽधि, एतत् अदात् मह्यम्। "सुवास्तुः नदी" "तुग्वं तीर्थं भवति" "तूर्णं" हि "एतत्" अवगाहनार्थम् "आयन्ति"। अत्र दानसम्बन्धात् सुवास्तुशब्दो नद्यभिधाने, प्रसिद्धं हि नद्यां दानम्, नदीसम्बन्धाच्च तुग्वशब्दोऽपि तीर्थाभिधायक इत्युपपत्तिः। निगमार्थप्रकाशनायैवं सूक्तगतोऽपि अन्वीक्षितव्य एवार्थ इत्येतत् प्रदर्शितमाचार्य्येण॥

"नंसन्ते (२२)"—इति। एतदनवगतम्। "नमन्ते"—इत्यवगमः। "कुविनंसन्ते"—इति निगमः, "ताँ आ रुद्रस्य मीव्ळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः। यत् सस्वर्त्ता जिहीळिरे यदाविरव तदेनं ईमहे तुराणाम्"॥ इति (ऋ० सं० ५, ४, २८, ५)। वसिष्ठस्येयमार्षम्। 'तान्' अहं 'मीव्ळ्हुषः' मरुतः वर्षस्य सेक्तॄन् धनवतः, बलवतः वा 'आविवासे' आभि-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुख्येन स्थित्वा परिचरामि। किंलक्षणान् पुनः मरुतः आविवासे? 'रुद्रस्य' इन्द्रस्य स्वभूतान्, आप्तान् वा। अथवा 'मीव्हुषः' इति रुद्रविषयं षष्ठ्येकवचनान्तं स्यात् मीव्हुषो रुद्रस्य स्वभूतानिति। कस्मात् पुनस्तानहं परिचरामि? यस्मात् ते मरुतः 'कुविद्' बहु 'नंसन्ते' 'नमन्ते' 'पुनः' वर्षाद्युपकारेण अस्मान् प्रति नमन्ते, प्रह्वीभवन्ति। किञ्च, 'यत्सस्वर्त्ता' यच्छरीरगतम् 'एनः' जिहीलिरे' लज्जयन्ति, यच्च 'आविः' प्रकाशम्, तदेवम्प्रकारमुभयलक्षणमपि। एनोऽस्मान् 'जिहीलिरे' लज्जयन्ति। तदेषां मरुतां 'तुराणां' त्वरमाणानां प्रसादेन उभयलक्षणमपि 'अवयजेमहि' निर्णुदेमहि,—इत्येतत् 'ईमहे' 'याचामहे' अनेन परिचारेण आराध्यैतान् मरुत इति। "नसत इत्येतदुपरिष्टात्" द्वादशाध्याये "व्याख्यास्यामः"—"अभि प्रवन्त समनेव योषाः" (ऋ० सं० ३, ८, ११, ३)—इति व्याख्याने, "नसतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति॥

"आहनसः (२३)"—इति। एतदनवगतम्। "आहननवन्तः"—इत्यवगमः। "ये ते मदा आहनसः"—इति निगमः, "परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम्। ये ते ०—० मघम्॥"—इति (ऋ० सं० ७, २, ३३, ५)। पावमानी सौमी। कवेर्भार्गवस्येयमार्षम्। जगती। हे भगवन्! 'सोम!' 'परिप्रधन्व' परिप्रक्षर, एतस्मात् दशापवित्रात्। 'स्वस्तये' स्वस्त्ययनाय अस्माकम्। 'नृभिः' एतैः ऋत्विग्भिः, 'पुनानः' पूयमानः। किञ्च, 'अभिवासय' अभिप्रच्छादय,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अभिभावय। 'आशिरम्' तृतीयसवने। किञ्च, 'ये ते मदा आहनसः' ये ते मदाः तव आहननवन्तः, "वञ्चनवन्तः" सम्मोहयितारः, 'विहायसः' महान्तः, तैः 'इन्द्रं' 'चोदय' प्रेरय, 'दातवे' "दानाय" 'मघं' धनम्। यथास्माकं तैर्मदैरनभिहतचेताः सन् दद्यात् मघं धनमित्यर्थः॥ ७ (१५)॥

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि। अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम्॥ उपादर्शि शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात्तस्यैव वक्षो भासाध्यूढ इदमपीतरद्वक्ष एतस्मादेवाध्यूढं काये शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवत्यापोऽपि शुन्ध्युव उच्यन्ते शोधनादेव नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुतेऽद्मसदद्मान्नं भवत्यद्मसादिनीति वाद्मसानिनीति वा। ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम्। (स्वपतो बोधयन्ती) शाश्वतिकतमागात् पुनरेयुषीणाम्। ते वाशीमन्त इष्मिणः। ईषणिन इति वैषणिन इति वार्षणिन इति वा वाशीति वाङ्नाम वाश्यत इति सत्याः। शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते परितक्म्येत्युपरिष्टाद् व्याख्यास्यामः ॥८(१६)॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४, २ ॥

"अम्नसत् (२४)"—इति। एतदनवगतम्। "अम्नसादिनीति वा अम्नसानिनीति वा" शब्दसमाधी। "उपो अदर्शि—इति निगमः (ऋ० सं० २, १, ७, ४)। कक्षीवत आर्षम्। औषसी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते, 'उपो अदर्शि' उपश्लिष्टा दृश्यत इयमुषाः। कस्य? 'शुन्ध्युवः' शोधयितुरादित्यस्य, आदित्यो हि यदप्यशुचिर्भवति, तदपि रश्मिभिः स्पृष्ट्वा शुचीकरोति। "सूर्यः पवित्रमुच्यते"—इति वक्ष्यति। तमांसि वा शोधयतीति शुन्ध्युः, तस्य शुन्ध्युवः। कथं पुनरुपश्लिष्टा दृश्यते? 'वक्षो न' वक्ष इव, यथा तस्य स्वभासः स्वप्रकाशजालं वक्षोभूतमेतस्मिन् मण्डलेऽध्यूढम्, एवमियमुषा एतस्मिन् मण्डले उपश्लिष्टा दृश्यते, सन्निकर्षात्। प्रासङ्गिकमुच्यते शब्दसामान्यात्,—"इदमपीतरत्" "वक्षः" पुरुषवक्षः, पशुवक्षो वा अङ्गम् "एतस्मादेव" वहेर्धातोः (भू० प०), इदम् "अध्यूढम्" अधिप्रवेशितमेव "काये" शरीरे भवति। "शकुनिरपि" य एष मद्गुर्नाम, अयमपि "शुन्ध्युरुच्यते" "शोधनादेव" यो हि "उदकचरो भवति" नित्यशुद्ध एवेति शुन्ध्युः। "आपोऽपि शुन्ध्युव उच्यन्ते" ता अपि हि शोधयन्ति। "एवं" तावदियम् "उषाः" आदित्यस्यवक्ष इवोपश्लिष्टा दृश्यते। किञ्च इयमेवोषा नोधाः इवाविष्कृ-



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तप्रियाणि "नोधा ऋषिर्भवति" स हि "नवनं" स्तोत्रं देवताः प्रति "दधाति"। "स यथा" स्वमुखोद्गीर्णया "स्तुत्या" प्रियाण्यात्मनः "कामान्" स्वानि कामाख्यानि "आविष्कुरुते" आविष्कृणोति, प्रकाशति देवताः प्रति। "एवम्" इयम् "उषाः" स्वात्मनः एवोद्गीणन प्रकाशेन "रूपाणि" जनानाम् "आविष्कुरुते" प्रकाशीकुरुते। किञ्च, इयमेवोषाः 'अद्मसन्न ससतो बोधयन्ती' "अद्म अन्नम्" तत् प्रतिकर्त्तव्यतया सीदति, तद्वा सनोति, सम्भजत इति "अद्मसत्" गृहाधिकारे नियुक्ता अन्नसाधिका स्त्री। सा यथा प्रातरेव क्षीराद्युपादानार्थं 'ससतः' "स्वपतः" जनान्, दोहकादीन् "बोधयन्ती" अन्नं साधयिष्यन्ती, एवमुषा अपि जनान् बोधयन्ती, तत्काले हि ते इतिकर्त्तव्यतार्थे जनाः प्रतिबुध्यन्ते, तेनैतयैव बोधिता भवन्ति। आह,—कदा पुनरेतद्भवति ? इति। उच्यते,—यदा 'शश्वत्तमागात्' "शाश्वतिकतमा" नित्यतमा "आगात्" आगच्छति, तदेव जनान् बोधयति, एवमुषा रूपाण्याविष्कुरुते। एवञ्च वक्ष इवोषा आदित्यस्य दृश्यते। आह,—का वा सा शश्वत्तमा इयमुषाः ? इति। उच्यते,—'पुनरेयुषीणाम्' "पुनरागामिनीनाम्"—इत्यर्थः। या एताः काश्चिद्गत्वा पुनरागच्छन्ति, ताः पुनरेयुष्यो गावः, अन्या वा, तासां पुनरेयुषीणामिति निर्धारयति। एषैव 'शश्वत्तमा' शाश्वतिकतमा। एवमेतस्मिन् मन्त्रे, सा यथा अद्मसदित्यन्नसाधिका स्त्री उच्यते, सा हि तत्काले जनान् दोहकादीन् बोधयति, उषा अपि च तत्काल एवागच्छतीति,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवमुपमानमुपपद्यत इत्युपपत्तिः। अन्ये तु मक्षिकामझसदं मन्यन्ते, सापि ह्यन्ने सीदति, सनोति वान्नं तत्काले च प्रतिबुध्यमाना अन्यान् बोधयतीति ॥

"इष्मिणः (२५)"—इति। एतदनवगतम्। ईषणिन इति वा, एषणिन इति वा, आर्षणिन इति वा" शब्दसमाधयः। "श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्कभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः" ॥ इति निगमः ( ऋ० सं० १, ६, १३, ६ )। राहुगणस्य गोतमस्येयमार्षम्। जगती। मारुतस्य प्रैयङ्गवस्य चरोरियं याज्या, तत्र ह्युक्तम् "प्रियवती याज्यानुवाक्ये भवतः" —इति। 'श्रियसे कम्' श्रियोऽर्थाय यजमानाय आत्मने वा, कमित्यनर्थकमेव, कामये इति वा अस्यार्थः। 'भानुभिः' दीप्तिभिः सूर्य्यरश्मिभिः, येऽन्तरिक्षे मरुतः 'सम्मिमिक्षिरे' सङ्गच्छन्ते, 'ते' एव 'रश्मिभिः' सर्वलोकनियन्तृभिः 'सम्मिमिक्षिरे'—इत्येतदेवानुवर्त्तते। 'ते' एव 'ऋक्कभिः' रसहर्त्तृभिः सम्मिमिक्षिरे। 'सुखादयः' सुखदातारः जनानाम्। शोभनानां वा हविषां खादितारः, अत्तारः, 'सुखादयः'। 'ते' एव 'वाशीमन्तः' वाग्मिनः ? 'इष्मिणः' "ईषणिनः" उपगमनवन्तः, "एषणिनो वा" इच्छावन्तः, "आर्षणिनो वा" आभिमुख्येन सर्वार्थानां द्रष्टारः, 'अभीरवो विद्रे' विदारयितव्ये शत्रौ प्राप्ते विगतभयः, अथवा 'विद्रे' वेद्मि, जाने। य एवंलक्षणा मरुतः, तेषां मरुतां यत् स्थानम् अन्तरिक्षलोकः, तस्य 'प्रियस्य' इष्टस्य 'मारुतस्य'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मरुतां स्वभूतस्य 'धाम्नः' स्थानस्य प्राप्तये, तानेव मरुतः स्तौमीत्यध्याहारः। एवमेतस्मिन् मन्त्रे 'वाशीमन्त इष्मिणः'—इत्येतस्मादेकवाक्यसम्बद्धात् 'इष्मिणः'—इत्येतन्मरुद्विशेषणम्। "वाशीति वाङ्नाम"। "वाशी (११), वाणी (१२)"—इति पठितं वाङ्नामसु। वास्यत इति कारकावधारणम्॥

"वाहः (२६)—इति। एतदनवगतम्। पक्षेण चानेकार्थम्। "शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम्। एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम्॥"—इति निगमः (ऋ० सं० ३, ३, १६, ३)। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। होता ब्रवीति,—हे 'अध्वर्यो!' एहि 'प्रति गृणीहि' 'शंसाव' आवामुभावपि, न ह्यप्रतिगीर्य्यमाणं शस्यते, नाप्यशस्यमानं प्रतिगीर्य्यते, एवमितरेतरोपकारकत्वमभिप्रेत्योक्तं द्विवचनम्,—'शंसाव' इति। एवमितरेतरगुणसम्पन्नमेतत् 'वाहः' स्तोत्रं 'कृणवाव' आवाम्। स्तोम एव हि देवानां वोढा भवति। "वाहिष्ठो वां हवानां स्तोमः। (ऋ० सं० ६, २, २१, १)"—इति, "वोढृतमो ह्वानानां स्तोमः"—इति हि वक्ष्यति। एवमियमभिवहनस्तुतिः। एवमेतच्छस्त्रमाभिमुख्यगामि "इदम्" 'इन्द्राय' इन्द्रार्थम्, 'जुष्टम्' प्रियम्, तस्य यथा स्यात् तथा कुर्वः। अन्ये त्वेनाम् "अधिषवणप्रवादां" सोमाभिषवणप्रवादिनीं स्तुतिं मन्यन्ते, वाहःशब्दो हि उदकवाहाभिधानसारूप्यात् तत्र युक्तरूपतर इति कृत्वा यदा पुनरेवं, तदेवमर्थो योज्यः,—'इन्द्राय' 'इदं' 'वाहः' सोमोदकपूर्णमधिषवणफलका-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्व्यं वाहः 'जुष्ट" प्रियं यथा स्यात् तथा कुर्वः। तद्धि 'सुशस्तं' सुप्रतिगीर्णञ्च इन्द्रस्य प्रीतिजनकं भवति। एतदेव कर्त्तव्यमावाभ्यां यतः, अतो ब्रवीमि,—'एदं बर्हिः यजमानस्य सीद' एतद् बर्हिः, यदेतदग्रतःस्तीर्णमग्रेण होतारं बर्हिः। 'सीद' "स प्रतिगत्योपविशति"—इति ह्युक्तम्, 'यजमानस्य' अभिप्रेतकामावाप्तये आसीद। मा अवमंस्थाश्चिरेणैतच्छंस्यत इति, उपविष्टश्चेत् त्वं ममाग्रतः। 'अथ' अनन्तरमेव 'भूत्' भवति। 'उक्थं' शस्त्रमेतत्, इन्द्रार्थं शस्तम्, नात्र मम वाङ्मृषेत्यभिप्रायः। एवमियमभिवहनस्तुतिः, अथवा अधिषवणप्रवादा स्तुतिः, उभयथापि तु इयम् "ऐन्द्री त्वेव शस्यते" इदमेवैकमभिधानमत्र व्युत्पाद्यत इत्यभिप्रायः॥

"परितक्म्या (२७)"—"इति"। "एतदुपरिष्टाद् व्याख्यास्यामः" षोड़शाध्याये, तत्र हि एतत् "किमिच्छन्ती सरमा प्रेद मानट् ( ऋ० सं० ८, ६, ५, १ )"—इत्येतस्मिन् मन्त्रे प्रसक्तमायास्यतीति लाघवार्थमुत्कृष्टमिति॥ ८ (१६)॥

इति निरुक्तवृत्तौ नवमाध्यायस्य ( चतुर्थाध्यायस्य )
द्वितीयः पादः ॥ ४, २ ॥

——

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## तृतीयः पादः ।

सुविते सुइते सूते सुगते प्रजायामिति वा। सुविते मा धा इत्यपि निगमो भवति । दयतिरनेककर्मा । नवेन पूर्वं दयमानाः स्यामेत्युपदयाकर्मा । य एक इद्विदयते वस्विति दानकर्मा वा विभागकर्मा वा । दुर्वर्त्तुर्भीमो दयते वनानीति दहतिकर्मा । दुर्वर्त्तुर्दुर्वारः विदद्वसुर्दयमानो वि शत्रूनिति हिंसाकर्मा । इमे सुता इन्दवः प्रातरित्वना सजोषसा पिब-तमश्विना तान् । अयं हि वा सूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् । दयमान इति । नू चिदिति निपातः पुराणनवयोर्नू चेति च । अद्या चिन्नू चित्तदपो नदीनाम् । अद्य च पुरा च तदेव कर्म नदीनाम् । नू च पुरा च सदनं रयीणाम् । अद्य च पुरा च सदनं रयीणां रयिरिति धननाम रातेर्दानकर्मणः ॥ १ (१७)॥

"सुविते (२८)"—इति । एतदनवगतम् । अनेकार्थश्च । 'सु, इते'—इति, "सूते"—इति शब्दसमाधी । अत्र यदा "सु इते" इति विपरिणामः, तदा "सुगते" इत्यर्थः । यदा "सूते" इति, तदा "प्रजायाम्" सूते देवदत्ता पुत्रमिति प्रजायत इत्यर्थः । एवं 'सुविते'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

—इत्यस्य "सु इते, सूते" शब्दसमाधौ। तयोरेतद् यथासङ्ख्ये-नार्थवचनम्, "सुगते, प्रजायामिति"। "सुविते मा धाः"—इत्यपि निगमः। "अनाधृष्टमस्य नाधृष्यं देवानामोजो अभिशस्तिपाः। अनभिशस्त्यञ्जसा सत्यमुपगेषां सुविते मा धाः"—इति। अनेन तानूनप्त्रं संस्पृश्यते। हे तानूनप्त्र! 'अनाधृष्टमसि' अनाधर्षितमसि, त्वयि स्पृष्टे समयोपयन्त्रिता ह्येते नान्योऽन्यस्मिन् द्रोहमुपयास्यन्त्यृत्विजः। कुतः पुनरेतत् सामर्थ्यं तव? इति। इतः,—यस्मात् 'अनाधृष्यं देवानामोजः' अनाधर्षणीयं त्वम्। ओजो बलमित्यर्थः। किञ्च, 'अभिशस्तिपाः' अभिशंसनान् पासि त्वम्। 'अनभिशस्ति' नाभिशंसनीयं केनचित्, अनवद्यमित्यर्थः। 'अनु मे' 'इदं व्रतं व्रतपतिः' 'मन्यताम्' अनुमन्यताम् 'इदं व्रतं' कर्म, 'व्रतपतिः' अग्निः। 'मे' मयोपेयमानाम् एनां 'दीक्षाम्' 'अनुमन्यताम्' 'दीक्षापतिः' सोमः। किञ्च, 'अञ्जसा' अनन्तर्हितम्, अहम् 'सत्यम्' उपगेषम्' उपगतवान्। योऽहमेतदस्पृशम्, स त्वं हे तानूनप्त्र! एवमुपगतवन्तं मा 'सुविते' सुगते स्थाने, यत्र गतानां शोभनं गतं भवति, तत्र धेहि, अथवा प्रजायां जनयितव्यायां धेहि, यथा बह्वपत्या स्याम तथा कुर्वित्यर्थः।

"दयति (२९)"—इति। एष शब्दः "अनेककर्मा" अनेकार्थः, नत्वनेकविकल्पप्रकृतिः,—यथा सुवितेशब्दस्य अन्येनान्येन धातुना विगृह्यानेकार्थत्वमुक्तम्,—इणा विगृह्य "सु इते"—इति गत्यर्थत्वम्। सूतिना विगृह्य "सूते"—इति च प्रजार्थत्वम्, नैवमिह।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किन्तर्हि ? एकप्रकृतेरेवायं शब्दोऽनेकार्थो भवतीत्यस्य विशेषस्योपद्योतनार्थमुदाहरति। एवमुच्यमानेऽप्यनेकार्थत्वे दयतिरनेककर्मैवेत्येवमुक्तम्। अन्ये तु ब्रुवते,—यथा "सुविते"शब्दोऽनेकार्थोऽनवगतसंस्कारश्च, नैवमयम्। किन्तर्हि ? अनेकार्थ एवायमिति॥

एवमनेकार्थत्वं प्रतिज्ञाय उदाहरणेनैवोपपादयति,—"नवेन पूर्वं दयमानाः स्याम"—"इति" एतस्मिन् मन्त्रे दयतीत्येष शब्दः "उपदयाकर्मा"। उपदयेति रक्षणमुच्यते। 'नवेन' धान्येन 'पूर्वं' पुराणं 'दयमानाः' रक्षन्तः 'स्याम' पुराणेन च नवम्, इष्टं हि नवेन पुराणस्य च रक्षणं, पुराणेन च नवस्य, प्रसिद्धं च लोके। तस्मादिहायमुपपद्यते उपदयाकर्मा। चतुर्दशेऽध्याये इत्यस्य शेषः॥

"य एक इद् विदयते वसु"—"इति" एतस्मिन् मन्त्रे "दानकर्मा वा, विभागकर्मा वा"। "य एक इद् विदयते वसु मर्त्ताय दाशुषे। ईशानो अप्रतिष्कुत इन्द्रो अङ्ग॥" इति (ऋ० सं० १, ६, ६, २)। राहुगणस्य गोतमस्यार्षम्। ऐन्द्री। उष्णिक्। 'यः' इन्द्रः 'एकः इद्' एक एव स्वतन्त्रः 'वि' विविधं 'वसु' धनं 'दयते' ददाति। कस्मै ? 'मर्त्ताय' मनुष्याय। किंलक्षणाय ? 'दाशुषे' दत्तवते हवींषि। अथवा विभागकर्मा। 'दाशुषे' 'वसु' 'विदयते' विभजते इत्यर्थः। किंलक्षणः पुनरिन्द्रो ददाति, विभजते वा ? इति। उच्यते,—'ईशानः' ईश्वरः, 'अप्रतिष्कुतः' अप्रतिस्खलितः संग्रामेषु। 'इन्द्रः' 'अङ्ग' क्षिप्रं धनं ददाति,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

विभजते वा, 'दाशुषे' यजमानाय, तमहं स्तौमि, सोऽस्माकमेतत् करोत्वित्यभिप्रायः। ईशानः, इन्द्रः, अन्यत्र दानविभागाभ्यां दाशुषे यजमानाय वस्वेकवाक्ये श्रूयमाणं किमन्यत् कुर्य्यात्? तस्माद् वाक्यसामर्थ्यादत्र "दानकर्मा वा विभागकर्मा वा"—इत्युपपद्यते ॥

"दुर्वर्त्तुर्भीमो दयते वनानि"—"इति" एतस्मिन् मन्त्रे "दहतिकर्मा"। निगमप्रसक्तं निर्ब्रवीति,—"दुर्वर्त्तुः दुर्वारः" दुर्वारणीय इत्यर्थः। "अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना। शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्त्तुर्भीमो दयते वनानि॥" इति (ऋ० सं० ४, ६, ८, ५)। आग्नेयी। भरद्वाजस्यार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। उपज्वलितस्याग्नेः 'अध' अथ, अनन्तरमेव तस्य 'जिह्वा' ज्वाला दारुषु 'पापतीति' पुनः पुनः पतति, 'प्रवृष्णः' प्रवर्षितुः इन्द्रस्य 'गोषुयुधः' गवार्थं वादे पणिभिः सह असुरैर्युध्यते, अथवा 'गोषु' अप्सु, मेघेन सह युध्यत इत्यर्थः। 'न'—इत्युपमा, इन्द्रस्य गोषु युध्यत इव। 'अशनिः' 'सृजाना' तेनैव सृज्यमानो यथा पतति अशनिर्वज्रः, तथा अग्नेर्ज्वाला दारुषु पापतीति। किञ्च, 'शूरस्येव प्रसितिः क्षातिरग्नेः'। यथा कस्यचित् 'शूरस्य' विक्रान्तस्य वा अप्रतिहतगतेः 'प्रसितिः' प्रसहनं संग्रामानुप्रवेशमार्गः छिन्नभिन्नरुग्णैः शत्रुभिः प्रकीर्णः स्यात्, एवमस्य 'अग्नेः' 'क्षातिः' दहनमार्गः, ईषत्प्लुष्टार्द्धदग्धभस्मीभूतैर्वृक्षैर्गुल्मादिभिराकीर्य्यते। कदा पुनरेतद् भवति? 'दुर्वर्त्तुः' दुर्वारः, दावा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ग्नीभूतः, 'भीमः' सर्वप्राणिभयङ्करो यदायमग्निः 'दयते' दहति। किम्? 'वनानि'। एवमयमाग्नेये मन्त्रे वनशब्दसन्निकर्षे श्रूयमाणे दयतिशब्दो दहनादन्यत् किमभिदध्यात्? तस्मात् सामर्थ्यादिहायं "दहनकर्मा"—इत्युपपत्तिः॥

"विदद्वसुर्दयमानो विशत्रून्"—"इति" एतस्मिन् मन्त्रे "हिंसाकर्मा"। "इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो विशत्रून्। ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे॥" इति (ऋ० सं० ३, २, १५, १)। विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। उद्भिद्वलभिदोर्निष्केवल्ये निविद्धानीयस्य सूक्तस्य प्रथमैवेयम्। 'इन्द्रः' 'पूर्भित्' असुरपुरां मेघानां वा भेत्ता, अद्भिः पूर्णा अपो वा पालयन्तीति मेघाः, पुरः, "पॄ पालनपूरणयोः (क्र्या० प०)"—इत्येतस्य। 'आतिरत्' आभिनत्। 'दासं' दासयितव्यं मेघम्। कैः सहायैः सह? 'अर्कैः' वृक्षैः, देवैर्माध्यमिकैर्वा। किंलक्षणः पुनरसाविन्द्रः, य आतिरत्? 'विदद्वसुः' प्राप्तधनः। किं कुर्वन् आतिरत् दासम्? 'विदयमानः' विविधं हिंसन् 'शत्रून्' ये मेघवधप्रतिबन्धिनः। आह,—किं विदद्वसुत्वेनैवैकेन गुणेन युक्तो य इन्द्रः, स एतदकरोत्? नेत्युच्यते,—'ब्रह्मजूतः' च ब्रह्मणा स्तुतिलक्षणेन 'जूतः' प्राप्तः, प्रीतो वा, ब्राह्मणतन्वा शरीरेण 'वावृधानः' वर्द्धमानः 'आपृणत्' आपूरयति। 'रोदसी' द्यावापृथिव्यौ उभे अपि 'भूरिदात्रः' बहुदानश्च इन्द्रो दासमातिरत्। एवमत्र "विदद्वसुर्दयमानो विशत्रून्"—इति शत्रुसन्निधौ दयतेः किमन्यत् सामर्थ्यमुपपद्येतान्यत्र वधात्?

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान्। अहं हि वा मूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्"—इति। "दयमान इति"। अत्र दयतिर्गत्यर्थः। दयमान उड्डीयमानः काकोऽन्तरिक्षेणाधस्तात् मां सुप्तं दोषायामबोधयत्। मृग्योऽत्र शेषः॥

"नू चित् (३०)"—इति। एषः "निपातः" अनेकार्थत्वेनेह समाम्नातः। न हि निपातानां प्रकृतिप्रत्ययादिसंस्कारोऽस्ति, यस्यानवगतं स्यात्। स च पुनरयं "पुराणनवयोः" अर्थयोर्वर्त्तते। प्रकरणोपपदवशात् पुराणतां कस्यचिदर्थस्यावद्योतयति, नवतां च कस्यचित्॥

"नू च (३१)"—"इति च"। अयमपि पुराणनवयोरर्थयोर्वर्त्तते। अयन्तु नू चिदित्येतस्यैवार्थसामान्यप्रसङ्गादसमाम्नात एवोदाहृतः॥

नू चिदित्यस्योदाहरणम्,—"अद्या चिन्नू चित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र। निषवता अब्मसदो न सेदुस्त्वया दृढानि सुक्रतो रजांसि॥"—इति (ऋ० सं० ४, ७, २, ३)। भरद्वाजस्येयमार्षम्। त्रिष्टुप्। उक्थपर्य्यायेष्वच्छावाकस्य शस्त्रे माध्यन्दिने सवने विनियुक्ता। 'अद्य' च पुरा च, तदेव कर्म 'नदीनां' वर्त्तते। कतमत्? 'तत्' उद्दिश्य वहनं कर्म। कथं नाम? अस्य लोकस्योपकारायाजस्रमेता वहेयुरिति। गातु" गमनमार्गम् 'आभ्यः' नदीभ्योऽर्थाय त्वम् 'अरदः' अखनस्त्वम्। किं गमनम्? गच्छन्त्यनेनेति गमनम्। हे 'इन्द्र!'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तदेव कर्माद्यापि वर्त्तते, तासां नदीनाम्, यथा 'व्यादिष्टमेव 'त्वया'। ताभिरद्यापि तदनुष्ठीयत इत्यभिप्रायः। यदुक्तं पुरस्तादपि, "इन्द्रो अस्माँ अरदत्"—इत्यत्र। एवं तावदयं त्वयैव नद्यधीनेनोपकारेणानुगृह्यते लोकः। किञ्च, 'निपर्वता अद्मसदो न सेदुः'। यः एते 'पर्वताः' पर्ववन्तो मेघाः, 'अद्मसदः' निष्पादयितव्यमन्नमस्माभिरित्येतदर्थमुद्दिश्यान्तरिक्षे लोके सीदन्ति, अवतिष्ठन्ते, गच्छन्ति वा, तेऽपि युष्मद्वीर्यैर्पसृदिता एवोदकभूताः, नीचैर्भूम्यामत्र, निष्पत्त्यर्थं 'सेदुः' सीदन्तीत्यर्थः। तदेवं कृत्वा ( किं बहुना ) सर्वथाप्युदकप्रदानद्वारेण त्वयैवैतानि, हे 'सुकर्मन्! 'दृढ़ानि' दृढ़ीकृतानि 'रजांसि' लोका इत्यर्थः। त्वञ्चेदेषामेवमन्नमुदकञ्च न व्यधास्यः, सर्व एवैते लोका नाभविष्यन्नित्यभिप्रायः। इहाद्यैतस्य सन्निधौ वर्त्तमानो नूचिदित्येष पुराणाभिधायीत्युपपद्यते। इह पुराणनवयोरित्युक्तम्, तत्र पुराणाभिधायित्वस्यैतदुदाहरणम्, नवाभिधायिनः "नू चिन्नु वायोरमृतं विदस्येत्" अत्र हि वक्ष्यति,—"नवञ्च पुराणञ्चेति"॥

नू चेत्यस्योदाहरणम्,—"नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम्। सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन् द्रविणोदाम्।" इति ( ऋ० सं० १, ७, ४, २ )। कुत्सस्येयमार्षम्। पृष्ठ्यस्य षष्ठेऽहनि अग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते। 'नू च पुरा च सदनम्' अद्य च पुरा च सदनम्। कस्य? 'रयीणां' धनानाम्। किञ्च, 'जातस्य' उत्पन्नस्य 'जायमानस्य' 'च' अभिनिष्पद्यमानस्य भूत-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जातस्य 'क्षाम्' निवासमित्यर्थः। "तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति विज्ञायते"। "यत्र गां शयानां निर्जगाति मृतामेतामद्विद्वान् मन्यतेऽन्वग्नौ ह्येवैते प्रविशन्तीति च विज्ञायते"। तस्मादुपपद्यते स्थानत्वं निवासत्वं चाग्नेः। 'सतश्च' निष्पन्नस्य भूतजातस्य 'गोपां' गोप्तारम्, 'भवतश्च' उत्पद्यमानस्य 'भूरेः' बहुनः, गोप्तारमित्यनुवर्त्तते। य एवंलक्षणोऽग्निस्तं 'द्रविणोदां' धनस्य दातारम्, 'देवाः' 'धारयन्' धृतवन्त इत्यर्थः। क्व? हविर्वहनकर्मणि? "अथा देवा दधिरे हव्यवाहम्"—इति वक्ष्यति। एवमिह पुरा चेत्यस्य सन्निधौ नू चेत्येष शब्दो वर्त्तमानो नवाभिधायीत्युपपद्यते। पुराणाभिधायित्वे पर्य्योष्यमस्योदाहरणम्॥ १ (१७)॥

विद्याम॒ तस्य॑ ते व॒यमकू॑पारस्य दा॒वने॑। विद्याम तस्य ते वयमकुपरणस्य दानस्यादित्योऽप्यकूपार उच्यतेऽकूपारो भवति दूरपारः समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूपमृच्छतीति कच्छपः कच्छं पाति कच्छेन पातीति वा कच्छेन पिबतीति वा कच्छः खच्छः खच्छदोऽयमपीतरो नदीकच्छ एतस्मादेव कमुदकं तेन छाद्यते। शिशी॑ते शृ॒ङ्गे॑ रक्ष॑से वि॒निक्षे॑। निश्यति शृङ्गे रक्षसो विनिक्षणाय

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रक्षो रक्षितव्यमस्माद्रहसि क्षणोतीति वा रात्रौ नक्षत इति वा। अग्निः सुतुकः सुतुकेभिरश्वैः। सुतुकनः सुतुकनैरिति वा सुप्रजाः सुप्रजोभिरिति वा। सुप्रायणा अस्मिन् यज्ञे विश्रयन्ताम्। सुप्रगमनाः॥ २ (१८)॥

"दावने (३२)"—इति। एतदनवगतम्। "दानस्य"—इत्यवगमः। "अकूपारस्य (३३)"—इति। एतदनवगतम्। अनेकार्थम्। "अकुपरणस्य"—इत्यवगमः। द्वयोरप्येतयोरेक एव निगमः, "यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर। विद्याम तस्य ते वयमकूपारस्य दावने॥"—इति ( ऋ० सं० ४, २, १०, २)। अत्रेर्भौमस्येयमार्षम्। अच्छावाकस्य तार्तीयसवनिके आवापे नियुक्ता, "यदिन्द्रचित्र"—इति, इयञ्च। हे 'इन्द्र!' 'यत्' 'मन्यसे' जानीषे त्वं 'वरेण्यं' वरणीयम्, एतद्धनमिति, 'द्युक्षं' च, यत् द्युतिनिवासभूतम्, द्युतिमदित्यर्थः। 'तत्' अस्मस्यम् 'आहर'। कदाचित् त्वमाहृत्यापि न दद्याः? अतो ब्रूमः,—'तस्य' त्वयाहृतस्य धनस्य 'विद्याम' लभेमहि 'ते' तव स्वभूतस्य। किंलक्षणस्य? 'अकूपारस्य, "अकूपरणस्य" अकुत्सितपूरणस्येत्यर्थः। येन लब्धेन सुपूर्णमात्मानं मन्यामहे पर्य्याप्तमैहिकाय च श्रेयसे आमुष्मिकाय चेत्यर्थः। 'दावने' "दानस्य" इत्यर्थः॥ ईदृशस्य भावत्कस्य धनस्य वयमेव लब्धारः स्यामेत्यभिप्रायः। एवमिह यन्मन्यसे वरेण्यं, द्युक्षञ्च; तदाभरेति इन्द्र उच्यमानो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धनसन्निधानाद् दानादन्यत् किमुच्यते ? धनमेव हि प्रायेण मनुष्यैः प्रार्थ्यते, तस्मादत्राश्रूयमाणोऽपि धनशब्दोऽध्याहृतः। तच्च पुनः प्रार्थ्यमानं बहु प्रार्थ्यते। तस्मादकूपारस्येत्येष शब्दोऽतिपरोक्षवृत्तिः। "अकुपरणस्य"—इत्येवं परोक्षवृत्तित्वेनावस्थाप्य, ततः अकुत्सितपुरणस्य…इत्येवं प्रत्यक्षवृत्तित्वेन व्याख्यायते। अत्र कुरिति कुत्सार्थः, परणं पूरणमुच्यते, कुत्सितं परणं 'कुपरणम्' न कुत्सितं परणं 'अकुपरणम्' तस्य "अकुपरणस्य" प्रभूतस्येत्यर्थः॥ दानसम्बधादेव "दावने"—इत्येष शब्दो दानार्थ इत्युपपत्तिः। एतस्मिन् मन्त्रे "अकूपारस्य, दावने"—इत्ययमनयोः पदयोरनुक्रमः, समाम्नाये पुनः "दावने, अकूपारस्य"—इति मन्त्रपाठव्यतिक्रमेणानुक्रमः। तेन ज्ञायतेऽन्यैरेवायमृषिभिः समाम्नायः समाम्नातः, अन्य एव चायं भाष्यकार इति, एको हि समाम्नानं भाष्यं च कुर्वन्, प्रयोजनस्याभावादेकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत्। अविवक्षितार्थाश्चैते मन्त्रे निगमाः, तेषु सम्पत्त्या काकतालीयन्यायेन कस्मिंश्चिदेकस्मिन्नेव निगमे द्वे पदे अगच्छतस्ते यथोपागते एव भाष्यकारो व्याचष्टे इत्यदोषः॥

"आदित्योऽप्यकूपारः"—इति "उच्यते"। किं कारणम् ? स हि अकुत्सितस्य महतोऽध्वनः पारयिता भवति, उदयादारभ्य यावदस्तमिति। "समुद्रोऽप्यकूपार उच्यते" असावपि ह्यकुत्सितपारः आत्मनैव भवति। "महापारः"—इति पर्यायेणार्थवचनम्, विस्तीर्णपार इत्यर्थः। "कच्छपोऽप्यकूपार उच्यते"

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स हि "न कूपमृच्छति" अल्पोदकत्वात्, किं तर्हि ? यत्र बहुप्रकीर्णमुदकम्, तत् स्थानं गन्तुमिच्छति, समुद्रं नदीं वा। आख्यानप्रसक्तमुच्यते,—"कच्छपः" "कच्छम्" आत्मनो मुखसम्पुटं "पाति" रक्षति, स हि किञ्चिद् दृष्ट्वा स्वशरीरे एव मुखसम्पुटं प्रवेशयति, सम्पुटे हि कच्छशब्दः प्रसिद्धः, प्राणिवाच्यः कच्छपुट इति च। "कच्छेन" कटाहेन इतराण्यङ्गानि पातीति वा, स हि किञ्चिद् दृष्ट्वा सर्वाण्यङ्गानि कटाह एवानुप्रवेश्य कूर्मत्वेनेवावतिष्ठते। अथ "वा" "कच्छेन" मुखसम्पुटेन "पिबतीति" कच्छपः। विग्रहप्रसक्तः कच्छशब्दो निरुच्यते,—य एष कच्छो मुखसम्पुटः कटाहो वायं कच्छः, आह किमुक्तं भवति ? "खच्छः"—इत्युच्यते, स हि "खच्छदः" खम् आकशं छादयति, स हि मध्ये सुषिरो भवति। "अयमपीतरो नदीकच्छ एतस्मादेव" कसञ्ज्ञकेन उदकेन "छाद्यते" इति कच्छः॥

आदित्योऽप्यकूपारः, समुद्रोऽप्यकूपारः, कच्छपोऽप्यकूपारः —इत्येतेषु निगमाः पर्य्येष्याः॥

"शिशीते (३४)—इति। एतदनवगतम्। "निश्यति"—इत्यवगमः। "वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा। प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे॥" (ऋ० सं० ३, ८, १५, ३)।—इति निगमः। वृषो नाम जनपुत्रस्तस्येयमार्षम्, आत्रेयस्य वा कुमारस्य, उभयोर्वा। प्रातरनुवाकाश्विनयोः शस्यते। 'वि भाति' 'अग्निः' नानाप्रकारं भाति। केन ? 'बृहता ज्योतिषा'। स एवं विभासमानः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

किं करोति ? 'आविर्विश्वानि कृणुते' 'आविष्करोति' प्रकाशीकरोति 'विश्वानि' सर्वाणि भूतानि। 'महित्वा' महत्त्वेनेत्यर्थः। किञ्च, "प्रादेवीर्मायाः सहते" 'प्रसहते' प्रकर्षेणाभिभवति। किम् ? 'अदेवीर्मायाः' आसुरीरित्यर्थः। 'दूरेवा' दुरवाः, दुस्तर्पा वा, न ह्यग्नेस्तृप्तिरस्ति। किञ्च, 'शिशीते शृङ्गे' यथा हि वृषभस्तटान्निघ्नन् शृङ्गे तीक्ष्णीकरोति, एवमग्निरपि दारूणि दहंस्तीक्ष्णीकरोति ज्वालाः। कमर्थं पुरस्कृत्य ? "रक्षसो विनिक्षणाय" विहिंसनायेत्यर्थः॥ अत्र शृङ्गशब्दसन्निधानात् "शिशीते"—इत्यस्य तीक्ष्णार्थत्वम्, तीक्ष्णीकृतैर्हि चिर्भिर्विनिक्षणनमुपपद्यत इति॥ निगमप्रसेक्तमुच्यते,—रक्षः रक्षितव्यम्" हि शरीरमस्माद्भवति, रक्षो हि मानुषान् भक्षयति। "रहसि वा" विविक्ते प्रदेशे रक्षः "क्षणोति" हिनस्तीत्यर्थः। "रात्रौ नक्षते" गच्छति—"इति वा" रक्षः॥

"सुतुके ( ३५ )"—इति। एतदनवगतम्। पक्षेण चानेकार्थम्। "सुतुकनः"—इत्यवगमः, "सुतुकनैरिति वा" "स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः। अग्निः सुतुकः सुतुकेभिरश्वैरभस्वद्भी रभस्वाँ एह गम्याः॥"—इति निगमः (ऋ० सं० ७, ५, ३१, ७)। त्रितस्येयमार्षम् आप्त्यस्य। प्रातरनुवाकाश्विनयोः शस्यते यस्त्वं 'दिवस्पृथिव्योः' 'युवत्योः' सम्मिश्रीभवन्त्योः यानि भूतानि अन्तरा वर्त्तन्ते, तेषां सर्वेषाम् 'अरतिः' त्वमेवालमतिः, पर्य्याप्तमतिरित्यर्थः। 'सः' एवंलक्षणस्त्वमस्माकम् 'आवक्षि' आह्वयसि देवान्, 'महि' महत इत्यर्थः। स एवम्


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'आसत्सि च' आसीदसि च होतृत्वे। 'अग्निः'—इत्येतत् पदं सम्बोधनत्वेन विपरिणम्यते, 'आ वक्षि'—'आ च सत्सि'—इति मध्यमपुरुषयोगान्मन्त्रस्य। हे अग्ने! यस्त्वमेवङ्गुणयुक्तः 'सुतुकः' "सुतुकनः" सुगमन इत्यर्थः, अथवा "सुप्रजाः"। तुगित्यपत्य-नामसु पठितम् हिरण्यमपत्यमभिप्रेतमग्नेः, "हिरण्यरेता अग्निः" —इति श्रूयते, "अग्नेरपत्यं प्रथमं सुवर्णम्"—इति च। 'सुतुकैरैव' सुगमनैरश्वैः, अथवा "सुप्रजोभिः" कुलजैरित्यर्थः। अथवा शोभना प्रजा येषां ते सुप्रजाः, शोभनानामेवाश्वानां शोभनाः प्रजा भवन्तीति प्रजाद्वारेण चाग्निः स्तूयते। अथवा स एवाग्निः "सुतुकः' "सुप्रजाः" अपत्यञ्चास्य सर्वाः प्रजाः, ताश्च प्रति कल्याण इति "सुप्रजाः"। 'रभस्वद्भिः' त्वरितैः 'रभस्वान्' स्वयं च त्वरितः 'एह गम्याः' आगच्छस्त्वंहि कर्मणि, नित्यं हवींषि वोढुम्, कर्मैव तवेदमित्यभिप्रायः। एवमेतदिह "सुतुकः"—इत्यग्निविशेषणम्, सुतुकनैरश्वैरित्येतस्मात् तृतीयासम्बन्धादित्युपपत्तिः॥

"सुप्रायणाः(३६)"—इति। एतदनवगतम्। "सुप्रगमनाः" इति शब्दप्रतीतिः। यज्ञगृहद्वारोऽभिधेया यास्कमतेन, शाकपूणेस्तु अर्चिषः। "होता यक्षद्दुर ऋष्वा कवष्योऽकोषधावनीरुदाताभि-जिहतां वि पक्षोभिः श्रयन्तां सुप्रायणा अस्मिन् यज्ञे विश्रयन्ता-मृतावृधो व्यन्त्वाज्यस्य होतर्यज॥"—इति निगमः (य० का० सं० वा० सं० २८, ५)। मैत्रावरुणो ब्रवीति,—'होता यक्षत्' होता यजतु। किम्? एताः 'दुरः' यज्ञगृहद्वारः, अथवैता अग्न्य-र्चिषः। 'ऋष्वाः' महत्यः, अथवा हिंस्राः, द्वार्य्यैव हि यो निवा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रणीयः, स हिंस्यते, अर्चिषान्तु हिंस्रत्वमुपपद्यत एव। 'कवष्यः' विकर्त्तिताः, कुषिता इत्यर्थः, कपाटवत्यो वा यज्ञगृहद्वारः। 'अकोषधावनीः' अकोशधावनीः, तासु हि संवृतासु द्रव्यकोशाः सुरक्षा भवन्ति, अर्चिष्वपि हविः प्रक्षिप्तं नान्यतो धावति, किं तर्हि ? देवानेव प्राप्नोति, एतदकोषधावनीत्वमर्चिषाम्। एवंलक्षणा एता द्वारः, अर्चिषो वा 'उदाताभिर्जिहताम्' 'उज्जिहताम्' उत्तिष्ठन्तु, 'आताभिः' दिग्भिः, 'विश्रयन्ताम्' च 'पक्षोभिः' विव्रियन्ते कवाटसंवरणैः द्वारः, अर्चिषस्तु हविषोऽनुप्रवेशार्थम् पक्षोभिः स्वैरेवावयवैर्विश्रयन्ताम्। विवृताश्च सत्यः 'सुप्रायणाः' "सुप्रगमनाः" भवन्तु ऋत्विजं प्रति द्वारः, अथ पुनरर्चिषस्ततो हविषः सुप्रगमनाः सन्तु। सामान्यमेवेदमाशास्तं यत्, पुनस्तस्मिन्नेव वर्त्तमाने कर्मण्याशास्ते,—'अस्मिन् यज्ञे,' विश्रयन्तां' विव्रियन्ताम् 'ऋतावृधः' यज्ञवर्द्धयित्र्यः। या एता एवंलक्षणा द्वारः, अर्चिषो वा, ता अस्याः 'आज्यस्य व्यन्तु' य आसां स्वांशः, तं पिबन्तु। हे 'होतः !' त्वमपि मया प्रेषितः 'यज' एताः ॥ एवमेषः 'सुप्रायणाः'—इति दुरामर्चिषां वा सन्निधौ श्रूयमाणः सुप्रगमनाभिधायीत्युपपद्यते ॥ २ (१८) ॥

दे॒वा नो॒ यथा॒ सद॒ मिद्वृ॒धे अस॒न्नप्रा॑युवो रक्षि॒तारो॒ दि॒वेदि॑वे ॥ देवा नो यथा सदा वर्द्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाहन्यहनि च्यवन ऋषिर्भवति च्याव-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यिता स्तोमानां च्यवानमित्यप्यस्य निगमा भवन्ति । युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः । युवां च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुर्युवा प्रयौति कर्माणि तक्षतिः करोतिकर्मा रजो रजतेर्ज्योती रज उच्यत उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी उच्येते ( रजांसि चित्रा विचरन्ति तन्यव इत्यपि निगमो भवति ) हरो हरतेर्ज्योतिर्हर उच्यते ( उदकं हर उच्यते ) लोका हरांस्युच्यन्ते । ( असृगहनी हरसी उच्येते । प्रत्यग्ने हरसा हरः शृणीहीत्यपि निगमो भवति ) जुहुरे विचितयन्तः । जुह्विरे विचेतयमाना व्यन्त इत्येषोऽनेककर्मा । पदं देवस्य नमसा व्यन्त इति पश्यतिकर्मा । वीहि शूर पुरोडाशमिति खादतिकर्मा । वीतं पातं पयस उस्रियायाः । अश्नीतं पिबतं पयस उस्रियाया उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः ( उस्रेति च ) । त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः । गाभिः क्राणा अनूषत । गोभिः कुर्वाणा अस्तोषतः । आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः । आसिञ्च हरिं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्रोरुपस्थे द्रुममयस्य हरिः सोमो हरितवर्णोऽयमपीतरो हरिरेतस्माद्देव। वाशीभिस्तक्षताश्मन्मयीभिः। वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा। स शर्द्धद्य्यों विषुणस्य जन्तोर्मा शिश्नदेवा अपिगुर्ऋतं नः। स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य मा शिश्नदेवा अब्रह्मचर्य्याः शिश्नं श्नथतेः। अपिगुर्ऋतं नः। सत्यं वा यज्ञं वा॥ ३ (१६)॥

"अप्रायुवः (३७)"—इति। एतदनवगतम्। "अप्रमाद्यन्तः" —इत्येवमर्थप्रतीतिः। "आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः। देवा नो यथा सद मिद्‌ वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे॥"—इति निगमः ( ऋ० सं० १, ६, १५, १ )। गोतमस्येयमार्षम्। अग्निष्टोमे महाव्रते तृतीयसवने वैश्वदेवे शस्त्रे शस्यते। 'आ यन्तु' उपयन्तु, अस्माकं 'भद्राः' भन्दनीयाः, स्तुत्याः। 'क्रतवः' सोमक्रतवः, कामा वा। 'विश्वतः' सर्वतः, सर्वदैव यथाविहितेषु कालेषु। 'अदब्धासः' अनुपहताः, अविगुणाः, कैश्चिदपि दस्युभिः। 'अपरीतासः' अपरिप्राप्तपूर्वाः, अस्मच्छत्रुभिः। 'उद्भिदश्च' उद्भेत्तारः, एषां त्रयाणामपि लोकानाम्, येषां फलेनैतान् त्रीनपि लोकानुद्भिन्दीमहि, ते आगच्छन्तु। किञ्च, तथा च तेऽत्यर्थमविगुणा आगच्छन्तु, 'यथा' तैः परितोषिताः सन्तः 'देवाः' सदैव नित्यमेवा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्माकं वर्द्धनायोद्यताः 'असन्' स्युरित्यर्थः, भाष्येऽपि "स्युः"—इत्येष पाठः। 'अप्रायुवः' अप्रमाद्यन्तः, प्रमादमकुर्वाणः, असम्मुह्यमाना इत्यर्थः। वर्द्धयितारो 'रक्षितारः' च। 'दिवेदिवे' अहन्यहनि यथा स्युस्तथा ते सोमक्रतवः, सगुणाः कामा वा आगच्छन्तु। अत्र "अप्रायुवो रक्षितारः"—इति रक्षितृशब्देन समानार्थसन्निवेशादप्रायुवशब्दस्याप्रमादार्थत्वम्, रक्षणे हि सत्यप्रमादस्येष्टत्वात् ॥

"च्यवनः(३८)"—इति। एतदनवगतम्। "च्यावनः"—इत्येवमर्थप्रतीतिः। "ऋषिर्भवति"—इत्यभिधेयवचनम्' "च्यवानम्"—"इति" एवम् "अप्यस्य" ऋषेर्भृगुपुत्रस्य छन्दसि "निगमाः" सन्ति। च्यवन इति प्रसिद्धमेवेति कृत्वा निगमं न पठति, इतरथा त्वप्रसिद्धमल्पप्रयोगश्चैतदिति कृत्वा पठति,—"युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः। निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत् ता वां सवनेषु प्रवाच्या ॥"—इति (ऋ० सं० ७, ८, १५, ४)। काक्षीवत्या घोषायाः इयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। अश्विनावुच्येते,—हे अश्विनौ! "युवां" 'च्यवानम्' ऋषिं च्यावयितारं स्तोमानाम्। 'सनयं' वृद्धं गमनासमर्थं सन्तम् 'यथा' चिरन्तनं 'रथं' गमनासमर्थं कश्चिच्छिल्पी गमनसमर्थं कुर्य्यात्, एवं 'पुनः युवानम्' च्यवनमृषिं 'चरथाय' "चरणाय" गमनार्थम् 'तक्षथुः' कृतवन्तौ स्थ इत्यर्थः। किञ्च, 'निष्टौग्र्यमूहथुः' निरूहथुः, निर्हृतवन्तौ स्थः, 'तौग्र्यं' तुग्राणामपां सङ्घातं मेघानाम्। क्व पुनः निरूहथुः ?

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'अद्भ्यस्परि' चिरन्तनीनामन्यासामपामुपरि, अनुपक्षीणास्त्वेवान्यासु वार्षिकास्वप्सु, तासामेवोपरि लोकानुग्रहार्थमन्यमुदकसङ्घातं निरूहथुः। तान्येवमादीनि कर्माणि 'विश्वा' विश्वानि, सर्वाणि। युवयोः 'सवनेषु' यज्ञेषु, प्रातःसवनादिषु वा 'प्रवाच्या' प्रकर्षेण वचनीयानि स्तोतॄणाम्॥ एवमेतस्मिन् मन्त्रे "च्यवानः"—शब्देन च्यवन एव ऋषिरुक्तः, स हि श्रूयते सौकन्ये आख्याने,—जीर्णः सन्नश्विभ्यां पुनर्युवाकृत इति। तस्मादुपपद्यते निगमप्रसक्तमुच्यते,—"युवा, प्रयौति कर्माणि" मिश्रयति। "तक्षतिः करोतिकर्मा" करोतीत्यर्थः॥

"रजः (३६)"—इति। अनेकार्थम्। "रजतेः"—इति व्युत्पत्तिः॥ "ज्योती रज उच्यते" तद्धि अनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन। "या ते अग्ने रजःशया तनूः"—इत्येवमाद्युदाहरणं द्रष्टव्यम्। भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान् न पठति॥

"उदकं रज उच्यते" तदपि हि स्वेन स्नेहाख्येन गुणेनानुरञ्जयति। "भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्॥"—इति निगमः (ऋ० सं० ७, ६, ४, ६)। हे अग्ने! त्वमेवास्य 'यज्ञस्य' 'भुवः' पृथिवीलोकादमुं लोकं 'नेता'। रजसः उदकस्य च नेता, "अग्निर्वा इतो वृष्टिं समीरयति"—इति हि वक्ष्यति। क्व पुनर्नेता? 'यत्र' यस्मिन् लोके 'नियुद्भिः' अश्वजातिभिः 'शिवाभिः' सुखतमाभिः सहितं 'वायुम्' अन्तरिक्षस्थानं 'सचसे' संसेवसे त्वम्, तत्र नेता, मध्यस्थानानां देवानां

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्थितये। किञ्च, त्वमेव 'दिवि' अवस्थितः सर्वभूतमूर्द्धानं 'दधिषे' धारयसि। यज्ञाभिनिष्पन्नेनेतो लोकाहृतेन हविषा 'स्वः' स्वराख्यमादित्यम्। किञ्च, त्वमेव एतां 'जिह्वां' ज्वालाम् अत्यद्भुताम्, आत्मनः सकाशात् 'चकृषे' पुनः पुनः करोषि। यः अस्मत्प्रदत्तानि हवींषि उपक्षिपति, यस्त्वमेवङ्गुणयुक्तस्तं त्वां वयमेतस्मिन् कर्मणि 'हव्यवाहं' हविषां वोढारम्, अनेन पुरोडाशाख्येन 'हविषा' यजामः। पौर्णमासस्याग्नेयस्य हविषो याज्यैषा॥

"लोका रजांस्युच्यन्ते" तेष्वपि हि प्राणिनो रज्यन्ते। "त्वया दृढानि सुक्रतो रजांसि" (ऋ० सं० ४, ७, २, ३)—इति व्याख्यातो निगमः॥

"असृगहनी, रजसी उच्येते"। असृग् रुधिरम्, असृक् च अहश्च असृगहनी, ते अपि रजसी उच्येते। "मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति"—इति रुधिरस्योदाहरणम्। "अहश्च कृष्णमहरर्जुनञ्च"—इत्यह्न उदाहरणम्॥

"हरः (४०)"—इत्येतदनेकार्थम्।"हरतेः"—इति व्युत्पत्तिः। "ज्योतिर्हर उच्यते" तद्धि ह्रियते, हरति वा स्नेहम्, विरूक्षीकरोति। हरति वा तम इति हरः। "या ते अग्ने हरःशया तनूः" "अग्ने यत्ते हरस्तेन तं प्रति हर"—इत्येवमादयः प्रचुरा एव निगमा इति अत्रापि भाष्यकारो न पठति॥

"उदकं हर उच्यते" तद्धि ह्रियते प्राणिभिः जीवनाय॥

"लोका हरांस्युच्यन्ते" तेभ्यो हि क्षीणपुण्याः प्राणिनो ह्रियन्ते॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"जुहुरे (४१)"—इति। एतदनवगतम्। "जुह्विरे"—इत्यत्र-गमः। "जुहुरे विचितयन्तोऽनिमिषं नृम्णं पान्ति। आदृढां पुरं विविशुः॥"—इति (ऋ० सं० ४, १, ११, २)। वत्रेरात्रेय-स्यार्षम्। जुहुरे, जुह्विरे, जुह्वति। योऽग्निं 'विचितयन्तः' "विचेतयमानाः" कर्मकर्तृसाधनानां याथार्थ्यं वेदान्तदर्शनेन जानानाः, ये च नराः 'अनिमिषम्' आदरवदवस्थानमात्मनः कृत्वा युक्तात्मानो 'नृम्णं' योगबलमात्मनः कर्मणि वर्त्तमाने 'पान्ति' रक्षन्तीत्यर्थः। आह,—ये एवं गुणयुक्ताः, किं तेषाम्? इति। उच्यते,—'आ दृढां पुरं विविशुः' ते 'दृढां' नित्यम्, अनावृत्तये परब्रह्ममयीं 'पुरम्' इमामदृढां शरीरपुरं पापिष्ठां हित्वेत्यभिप्रायः॥ विचेतयमाना हि वेदप्रामाणिकाः सन्तो हवनादृते किमन्यत् कुर्य्युः, येन दृढां पुरमाविशेयुः? शब्दसारूप्यमपि च "जुहुरे"—इत्येतस्मिंच्छब्देऽस्त्येव। प्रकरणाच्चेयमाग्नेयी ऋक्। तस्मात् "जुहुरे"—इत्येष शब्दो हवनार्थ एवेत्युपपद्यते॥

"व्यन्तः (४२)"—इत्येषोऽनेककर्मा। यस्माद्धातोरयं शब्दो निष्पद्यते, स धातुरनेककर्मा, अनेकार्थः। "वी गतिप्रजननका-न्त्यशनखादनेषु (अदा० प०)"—इति। तद्यथा,—"पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम्। नामानि चिद् दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ॥"—इति (ऋ० सं० ४, ४, ३५, ४)। इत्यत्र "पश्यतिकर्मा"। भरद्वाजस्येयमार्षम्। प्रातरनुवाकाश्विनयोः शस्यते, पशौ च विनियुक्ता। 'पदं' स्थानम्; अवस्थानं याथार्थ्यम्, 'अग्नेः' 'देवस्य' दानादिगुणयुक्तस्य 'व्यन्तः'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पश्यन्तो जानानाः। केन? 'नमसा' नमस्कारेण, 'स्तुत्या' मन्त्रेणेत्यर्थः। मन्त्रार्थपरिज्ञानादेव ह्यग्नेराध्यात्माधिभूताधियज्ञेष्ववस्थानं याथार्थ्यतो दृश्यते। पदशब्दो हि स्थाने प्रसिद्धः, पदस्थोऽयमिति हि वक्तारो भवन्ति लोके। अथवा 'नमसा' अन्नेन, हविराख्येनाभ्युद्यतेनेति योज्यम्। 'श्रवस्यवः' श्रव इच्छमानाः, अन्नमात्मनः प्रार्थयमानाः। य एवमग्नेः स्तुतिभिर्विद्वांसो याथार्थ्यम्, अन्नैर्वा अभ्युद्यतैः श्रव इच्छमानाः पश्यन्तोऽग्निमुपासते। किन्तेषाम्? इति। उच्यते,—'श्रव आपन्'। किंलक्षणं पुनराप्नुवन्ति? 'अमृक्तम्' अमृदितम्, अनुपभुक्तमन्यैः। किञ्च, 'नामानि चित्' ये चैते ग्रन्थमात्राध्येतारः, केवलच्छान्दसाः, नामान्यपि च मन्त्रभावेनावस्थितानि धारयन्ति, अनर्थज्ञाः, 'यज्ञियानि' यज्ञार्हाणि, तेऽपि "भद्रायां' भन्दनीयायाम्, अग्नेः 'सन्दृष्टौ' सन्दर्शने 'रणयन्त' रमयन्त्यात्मानम्। तानपि भद्रेण चक्षुषा पश्यत्येवाग्निरित्यभिप्रायः॥

एवमेतस्मिन् मन्त्रे "पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्"—इत्येतेषां पदानामेकवाक्ययोगात् "व्यन्तः"—इत्यस्य शब्दस्य पश्यत्यर्थोऽप्युपपद्यते॥

"इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद। वीहि शूर पुरोडाशम्॥"—इति (ऋ० सं० ३, ३, ३, ३)। इत्यत्र "खादतकर्मा"। विश्वामित्रस्येयमार्षम्। रात्रिपर्य्यायेषु महारात्रिके पर्य्याये ब्राह्मणाच्छंसिनः शस्त्रे विनियुक्ता। 'इमा' इमानि, ब्रह्माणि, ऋग्यजुःसामाख्यानि स्वरसौष्ठवादियुक्तानि,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अस्माभिः ब्रह्मणोऽस्य हविषः वहनसमर्थानि, त्वां प्रतिक्रियन्ते, उच्यन्त इत्यर्थः। यज्ञो ब्रवीति,—हे इन्द्र! 'आ बर्हिः सीद' आसीदेदं बर्हिः प्रति। आसीनश्चैतस्मिन् बर्हिषि, 'वीहि' भक्षय एतमस्मत्प्रदत्त हे 'शूर'! 'पुरोडाशम्' ॥ एवमेतस्मिन् मन्त्रे "वीहि शूर पुरोडाशम्"—इत्येतस्मादेकवाक्यसंयोगात् "वीहि"—इत्येष शब्दः खादनार्थः प्रतीयति, किमयं बर्हिष्यासीन इन्द्रः पुरोडाशस्यान्यत्र भक्षणात् कुर्य्यात्? प्रसिद्धश्च लोके कठिनद्रव्यस्य भक्षणम्, भक्षयति मोदकादीनि। तस्मात् सामर्थ्याद्भक्षणार्थोऽयमित्युपपद्यते ॥

"वीतं पातं पयसः"—इत्यत्राशनार्थः। "उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः। उतो नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्रियायाः ॥"—इति (ऋ० सं० २, २, २३, ४)। मैत्रावरुण्येषा। त्रिष्टुप्। दीर्घतमस आर्षम्। मित्रावरुणावुच्येते,—'उत वां' अपि युवयोः, एतासु 'विक्षु मद्यासु' एतेषु मनुष्येषु मदयितृषु वर्त्तमानमेतत् 'अन्धः' हविर्लक्षणम्, यदि तस्मिन्नहनि मनुष्यैः भवद्भ्यां देयं पयस्याख्यम् आज्याख्यञ्च। तदेव 'गावः' एताः 'च आपः' 'देवीः' दानादिगुणयुक्ताः। आसां गवामुपकारं कुर्वन्त्यः, 'पीपयन्त' वर्द्धयन्तीत्यर्थः। यदेतदशनपानयोग्यम्, आज्यं सान्नाय्यलक्षणम् आभिरद्भिर्गाभिश्च युवयोरन्धो वर्ध्यते। 'उतो न अस्य' अप्यस्य हविषोऽस्मत्पूर्वो यजमानः पतिः। पूर्वं हि द्रव्यस्य यजमानः पतिर्भवति, तदनन्तरं स तद् ऋत्विग्भ्यः समर्पयति—'देवतायै

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

संस्कुरुतैवत्'—इति, ततस्ते तस्य हविषः पतयो भवन्ति। तानपेक्ष्य यजमानः 'पूर्व्यः पतिः'। तदपेक्षयैव ऋत्विज आहुः,—योऽस्मत्तः 'पूर्व्यः पतिः' अस्य हविषः, सः 'दन्' भवति, दददित्यर्थः। तेनाप्येतद् भवन्तावेवोद्दिश्य स्यात् प्रत्युत्सृष्टम्। एवमपि सदत्र भवत्यपि वयं यथा व्यादिष्टमेव तेन पूर्वेण हविःपतिना भवद्भ्यामेतद्भ्यः। तौ युवामस्य हविषः, 'पयसः' पयस्याख्यस्य, 'उस्रियायाः' पयसा निष्पन्नस्य, नातिकठिनस्य अशनयोग्यस्य स्वं भागमस्माभिर्दीयमानं 'वीतम्' अश्नीतं युवामित्यर्थः। पिबतं च यदेतदाज्यस्य स्वं भागम् उपस्तरणाभिधारणसम्बद्धम्। एवमस्मिन् मन्त्रे 'उस्रियायाः पयसा निष्पन्नस्य'—इति श्रूयमाणे पयस्याज्ये प्रतीयेते, तयोराज्यं पेयम्, तत् 'पातम्'—इत्यनेन सम्बध्यते, पारिशेष्यात् 'वीतम्'—इत्यस्य शब्दस्य पयस्यया सह सम्बन्धः, सा च नातिकठिना, नातिद्रवा, अशनयोग्या, तस्मात् "वीतम्"—प्रत्येष शब्दोऽशनार्थ इत्युपपद्यते, लोकेऽपि हि नातिकठिने नातिद्रवे अश्नातिशब्दः प्रसिद्धः,—'अश्नाति पायसम्'—इति ॥ निगमप्रसक्तमुच्यते,—"उस्रियेति गोनाम" "उत्स्राविणः" हि तस्याः सकाशात् क्षीरादयः "भोगाः" भवन्ति ॥

"क्राणाः" (४३)—इति। एतदनवगतम्। "कुर्वाणाः"—इत्यर्थप्रतीतिः। "गोभि॑ः क्रा॒णा अ॑नुषत"—इति निगमः। "गोभिः कुर्वाणा अस्तोषत"—इति निर्वचनम्, त्वामिन्द्रेति शेषः। "त्वामि॑न्द्र म॒तिभि॑ः सु॒ते सु॒नीथा॑सो व॑सूयवः। गोभिः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्राणा अनुषत ॥"—इति। हे 'इन्द्र !' त्वामस्मिन् सोमे 'मतिभिः' मतिमद्भिः 'सुते' मेधाविभिरभिषुते सोमे, य एव हि मतिमन्तः, त एव हि सोममभिषोतुं शक्नुवन्ति, नेतरे मतिहीनाः। 'सुनीथासः' सुष्ठु ये स्तोतुं शक्नुवन्ति, ते सुनीथाः। 'वसूयवः' वसुकामाः। आह,—किमेते कुर्वन्ति, मतिभिः सुते मेधाविभिरभिषुते सोमे? उच्यते,—'गोभिः' वाग्भिः, स्तुतिलक्षणाभिः। अस्मिन्नभिषुते सोमे, आभिमुख्येन "कुर्वाणाः" 'अनुषत' "अस्तोषत" स्तुवन्तीत्यर्थः। अभिषुतेषु सोमेषु किमन्यदाभिमुख्येन करणाद् इन्द्रस्य गोभिः सुनीथाः स्तुवन्तः कुर्य्युः, तस्मात् "क्राणाः"—इत्येष शब्दः, "कुर्वाणाः"—इत्येवमुपपद्यते ॥

"वाशी (४४)"—इति। एतदनवगतम्। पक्षेण च अनेकार्थम्। "वाशीभिरश्ममर्याभिरिति वा, वाग्भिरिति वा" इति शब्दसमाधी। "वाश्यः" एवाभिधेयाः, वाच्याः वा। "आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः। परिष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥"—इति (ऋ० सं० ८, ५, १६, ४)। बुधस्य सोमपुत्रस्यार्षम्। 'आसिञ्च' प्रक्षिप, एतं 'हरिं' हरितवर्णं सोमम्। क्व? 'द्रोरुपस्थे' द्रुममयस्याधिषवणफलकद्वयस्योपरि। एवं तावदध्वर्य्युरुक्तः, स हि सोममुपावहरति। अधुनेतरानभिषवकर्तॄन् ब्रवीति,—यूयमपि अनेनाध्वर्य्युणोपावहृतमेनं सोममधिषवणफलकयोरुपरि 'वाशीभिः' एताभिः 'अश्मन्मयीभिः' "अश्ममयीभिः" 'तक्षत' संस्कुरुत, अभिषुणुतेत्यर्थः, "ग्रावभिरभिषुण्वन्ति"—इति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ह्यु क्तम्। अथवाऽयमन्योऽस्यार्द्धस्यार्थः,—हे उन्नेतः! 'आसिञ्च' प्रक्षारय, तं हरितवर्णं सोममनेन कलशेन। क्व? 'द्रोरुपस्थे' द्रोणकलशस्योपरि। यूयमपि च हे होतारः! आसिच्यमानम् एनं सोमं 'वाशीभिः' "वाग्भिः" स्तुतिलक्षणाभिः 'तक्षत' संस्कुरुत, यदस्यायज्ञियमपूतं, तत् स्तुतिभिः पुनीतेत्यभिप्रायः। 'अश्मन्मयीभिः' व्यापनसमर्थाभिरित्यर्थः। यूयमपि हे अध्वर्यवः! पूतमेतमुद्गातृभिः, सोमं 'परिष्वजध्वं' ग्रहेषु, स्थालीषु च। 'कक्ष्याभिः' अङ्गुलीभिः, अङ्गुलिभिरेव हि पात्रस्थः सोमो गृह्यते। यदेव चेदं ग्रहणमेष एव तस्य परिष्वङ्गः। परिष्वज्य च गृहीत्वा एनं सोमम् 'उभे' हविर्द्धाने-'धुरौ' 'प्रति' 'वह्निम्' इव, वोढारमिव, अनड्वाहं 'युनक्त' एनं सोमं सादयतेत्यर्थः। स हि सोमो हविर्द्धानधुरोः अधस्तात् खरे साद्यते। एतस्मादेव चानुडुद्योजनदेशं प्रति सामान्याद्वह्निमिव युनक्तेति लुप्तोपममुपपद्यते। अत्र "वाशीभिस्तक्षते"—इति लक्षणयोगात् अश्ममय्यो वाश्य एता ग्रावाख्या इति प्रथमस्यार्थस्योपपत्तिः॥ एतस्मिन्नर्थे 'आ तू षिञ्च'—इत्यासेकशब्दो गौणः, न हि सोमांशूनाम् अनभिषुतानाम् आसेकोऽस्ति कठिनत्वात्, तस्मादेतस्मिन्नर्थे प्रक्षेपणमात्रमेव सिञ्चतेरर्थः। अथवा 'आसिञ्चत हरिं द्रोरुपस्थे'—इत्यतोऽनन्तरं वाशी शब्दः श्रूयमाणो वाङ्नामधेयत्वेनाप्युपपद्यते एव, सोमो हि द्रोणकलशस्योपरि आसिच्यमाने वाग्भिः स्तूयते। एवमर्थद्वयमभिप्रेत्य उभयथा भाष्यकारेणोक्तम्,—"वाशीभिरश्ममयीभिरिति वा वाग्भिरिति वा"—इति॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"अयमपीतरो हरिः" मर्कटः, "एतस्मादेव" इति, हरितवर्णत्वाद्धरिरुच्यते, "शिरीषकुसुमप्रख्याः केचित् पिङ्गलकप्रभाः, वानराः"—इति श्रूयन्ते रामायणे॥

"विषुणस्य (४५)"—इति। एतदनवगतम्। "विषमस्य"—इत्यवगमः। "न यातव इन्द्र जूजुवुर्नो न वन्दनाः शविष्ठ वेद्याभिः। स शर्द्धदर्य्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः॥"—इति (ऋ० सं० ५, ३, ३, ५)। वसिष्ठस्येयमार्षम्। त्रिष्टुप्। उन्नीयमानसूक्ते माध्यन्दिने सवने शस्यते। हे भगवन्! "इन्द्र!" तथा, कुरु यथा 'न' इममस्मद्यज्ञं 'यातवः' यातयितारः, यज्ञविघ्नकर्त्तारः, केचिदपि 'जूजुवुः' आगच्छेयुरित्यर्थः? किञ्च, हे 'शविष्ठ' वलिष्ठ! य एते 'वन्दनाः' वन्दितारः, लाड(ट?)गौडादयः, जानपदीभि 'वेद्याभिः' आकृतिभिर्युक्ताः, किं ब्राह्मणाः एते स्युः, उतान्यजातीयाः केचिदिति? अथवा आवेदितव्याभिः प्रवृत्तिभिः युक्ताः न हि तासां प्रवृत्तीनामन्तोऽस्ति, याभिस्ते प्रवर्त्तन्ते चपलत्वात्। किञ्च, येऽपि चैते श्रोत्रिया अपि सन्तः 'शिश्नदेवाः' शिश्ने नित्यमेव प्रकीर्णाभिः स्त्रीभिः साकं क्रीड़न्त आसते, श्रोतानि कर्माणि उत्सृज्य, तेऽपि युष्मदनुग्रहादिदमस्माकम् 'ऋतं' यज्ञम् 'मा अपिगुः' मा आगच्छन्तु, नास्माकं तैरपि यज्ञमभिगच्छद्भिरर्थोऽस्तीत्यभिप्रायः। आह,—कीदृशास्तर्हि यज्ञमागच्छन्त्विति? उच्यते,—'स शर्द्धत्' स एवोत्सहतामिममस्मद्यज्ञमागन्तुम्, य एव 'अर्य्यः' ईश्वर आत्मीयानामिन्द्रियाणाम्; जितेन्द्रिय इत्यर्थः। यश्च 'विषुणस्य "विषमस्य" यज्ञविध्वंसयितुः 'जन्तोः' मनुष्यस्य

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

निग्रहाय समर्थः, येन परिपाल्यमाना एतं यज्ञमविघ्नेन समापये-महीत्यभिप्रायः॥ एवमेतस्मिन् मन्त्रे "यातवो वन्दनाः शिश्न-देवाश्च मा आगच्छन्तु"—इति प्रतिषिद्धेष्वेतेषु अनिष्टत्वादेतेषां 'स शर्द्धदर्य्यः'—इति श्रूयमाणमर्य्यवृत्तमनुष्याभ्यागमनविषयमेत-द्भवति, तस्येष्टत्वात्, स चाभ्यागतः सन्नवश्यं 'विषुणस्य' "विष-मस्य" मनुष्यस्य निग्रहं करोति, तस्मात् "विषुणस्य शब्दो विषमस्येत्युपपद्यते। यदा तु ऋतशब्दस्य "सत्यं वा"—इत्येत-दर्थवचनं भवति तदाऽस्माकम् 'ऋतं' सत्यम्, एवंलक्षणाः पापकर्माणः 'मा अपिगुः'—इत्येवं योज्यम्। अपिगुरिति चैव गमिस्तदा ज्ञानार्थः। एवमप्युपपद्यत इत्यतो भाष्यकारेणोक्तम्,—"सत्यं वा यज्ञं वा"—इति॥ ३ (१६)॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणव-न्नजामि। उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत्॥ आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि जाम्यतिरेकनाम बालिशस्य वासमानजातीयस्य वोपजन उपधेहि वृषभाय बाहुमन्य-मिच्छस्व सुभगे पतिं मदिति व्याख्यातम्॥ ४ (२०)॥

"जामि (४६)"—इति। एतदनेकार्थम्। भगिनी, बालिशः, पुनरुक्तञ्चास्याभिधेयानि। प्रकरणादेवैतेषामन्यतममस्मिन्नव-तिष्ठते। यथानेन तावद्भगिन्युच्यते, तथेदमुदाहरणम्,—"आ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

घा ता०—०मत्"—इति (ऋ० सं० ७, ६, ७, ५)। इयं यमी किल यमं प्रार्थयाञ्चकार,—एहि मैथुनाय सङ्गच्छावहा इति, तामकामयमानोऽसावनयर्चा प्रत्युवाच,—'आ घा ता गच्छान्'। 'घा'—इत्यनर्थक एव, 'आगच्छान्' आगमिष्यन्तीत्यर्थः। आह, कानि? उच्यते,—'ताः' "तानि उत्तराणि युगानि आगमिष्यन्ति" तेऽपि काला न तावत् साम्प्रतं वर्त्तते इत्यभिप्रायः। येषु किम्? 'यत्र' येषु 'जामयः' भगिन्यः भ्रातृणाम् "अजामि"—योग्यानि मैथुनसम्बन्धानि "कर्माणि" "करिष्यन्ति" कलियुगान्ते हि तादृशः सङ्करो भवति, न चेदं कलियुगं वर्त्तते इत्यभिप्रायः। यतो न तावद्द्योपि सङ्कीर्णो वर्णसङ्करधर्मः स्वाचारा एव तावत् प्रजाः। अतो ब्रवीमि,—'उप बर्बृहि' उपबर्हेहि। कस्मै? 'वृषभाय' तवोपरि रेतःसेक्तुमन्यकुलजो योग्यः, तस्मै। किमुपबर्बृहि? इति 'बाहुम्'। शयनीये सर्वथा प्रार्थ्यमानोऽप्यहं तव पतिः न भविष्यामीति। यतो ब्रवीमि,—'अन्यमिच्छस्व' अन्यमन्वेषयस्व। हे 'सुभगे!' 'पतिं' 'मत्' मत्त इत्यर्थः॥ एतमेतस्मिन् मन्त्रे, सूक्ते वा संवादाधिकाराज्जामिशब्देन भगिन्युच्यते इत्युपपद्यते॥

"जामि"—इत्येतदेव स्वरान्तशब्दरूपम् "अतिरेकनाम" भवति, पुनरुक्तनामेत्यर्थः। तदुत्तरत्र लक्षणतो भविष्यति, "तद् यत् समान्यामृचि समानाभिव्याहारं भवति, तत् जामि भवति"—इति पुनरुक्ताभिधानत्वेन। जामिशब्दस्य पर्य्येष्यो निगमः॥

"बालिशस्य वा" बालिशस्यैतदेव नाम। बालिशो मूर्खः,



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स हि बाल इव शेते, प्रमादित्वाद्धर्मकार्य्येषु। एतस्यापि पर्य्येष्यो निगमः॥

"असमानजातीयस्य वा" असमानजातीयो हि पुरुषस्य भगिन्याख्यो भ्राता, सा हि स्त्रीत्वादेवातुल्यजातीयैव पुरुषस्य भवति। जामिरित्येतस्मिन् शब्दे 'मिः'—इत्येषः "उपजनः" यदेवोक्तं भवति 'जा'—इति, तदेव जामीति। उभयथापि मन्त्रे प्रयोगो द्रष्टव्यः। "अन्यमिच्छस्व सुभगे! पतिं मत्—इति व्याख्यातम्"। निगदसिद्धमेवैतदित्यर्थः। अथवैतानि पदान्यधस्तात् तत्र तत्र व्याख्यातानि, तद् यथा,—"अन्यो नानेयः"—इत्येवमादि उपेक्षितव्यम्॥ ४ (२०)॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्। उत्तानयोश्चम्वो३र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात्॥ द्यौर्मे पिता माता वा पालयिता वा जनयिता नाभिरत्र बन्धुर्मे माता पृथिवी महतीयं बन्धुः सम्बन्धनान्नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते सम्बन्धव इति च ज्ञातिः सञ्ज्ञानात्। उत्तानयोश्चम्वो३र्योनिरन्तः। उत्तान उत्ततान ऊर्ध्वतानो वा तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः। (शंयुः सुखंयुः।) अथा नः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शंयोररपो दधात। रपो रिप्रमिति पापनामनी भवतः शमनश्च रोगाणां यावनश्च भयानामथापि शंयुर्बार्हस्पत्य उच्यते। तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये ॥ ५ (२१) ॥

इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ४, ३ ॥

"पिता (४७)"—इति। एतदनवगतम्। "पाता वा पालयिता वा"—इत्यवगमः। "द्यौर्मे पिता"—इति (ऋ० सं० २, ३, २०, ३)। इयमस्यवामीयं दीर्घतमस आर्षम्। तृतीयसवने वैश्वदेवे शस्यते। 'द्यौम पिता' येयं द्यौः, उपरि स्थिता द्युलोकाख्या, एष एव मम पिता। द्यौरहमित्येवं वैवाहिके कर्मणि द्युलोकभावेन पित्रा आत्मानमभिसम्पाद्यमानं दृष्ट्वैवमाह मन्त्रदृक्—'द्यौर्मे पिता'—इति। 'जनिता' जनयिता; उत्पादयितेत्यर्थः। आह,—कथम्? उच्यते,—'नाभिरत्र' नहनमेव नाभिः, अत्र एतस्मिन् द्युलोकलक्षणे पितर्युदकदानेनानुग्रहीतरि सति सन्तानोत्पत्त्यनुग्रहक्रमेणैव शुक्रात्मनोत्पत्तिरुपपद्यते,—इत्येवमभिसमीक्ष्योक्तम् 'द्यौर्मे पिता, जनिता, नाभिरत्र'—इति। 'बन्धुः मे' अङ्गसम्बन्धकारणाद् बन्धुः मे 'माता पृथिवी महीयम्'—इति। मातुर्मन्त्रेण पृथिवीत्वं सम्पाद्यमानं दृष्ट्वैवमाह,—'बन्धुर्मे माता पृथिवी महीयम्'—इति। उदकं हि द्युलोकात् पतितम्, पार्थि-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेन धातुना सम्पृक्तम्, ओषधिभावमागम्य, शरीरभावेनावतिष्ठते, —इत्येतदपेक्ष्य सर्वभूतानां द्यावापृथिव्यौ मातापितरौ उच्येते तत्र तत्र। तद्यथा,—"द्वे स्रुती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्च॥"—इति (ऋ० सं० ८, ४, १२, ५)। इत्येवमादि। तत्कृतस्य ह्युपकारस्याभावे सतीतरौ मातापितरावकिञ्चित्करावेव भवतः। तस्मादुपपद्यते द्यावापृथिव्योर्मातृपितृभावः। आह, —किमेते द्यावापृथिव्यौ अन्यत् किञ्चदनपेक्ष्यैव सर्वभूतानां मातृपितृभावं बिभृतः, उत अन्यदपि किञ्चिदपेक्षेते? इति। उच्यते,—अनयोः 'चम्वोः' द्यावापृथिव्योः 'उत्तानयोः' ऊर्ध्वमेव ह्यनयोः अन्तरा च प्रतिधारणीयोऽन्तः प्राणः तत इति उत्ताने द्यावापृथिव्यौ, प्राणेन हीमे वायुना सूत्रभूतेन विधृते तिष्ठतः, एतयोः द्यावापृथिव्योरुत्तानयोः य एषोऽन्तरिक्षाख्यः 'अन्तः' मध्ये योनिः' 'अत्र' एतस्मिन्नवकाशदानोपकारप्रवृत्ते सति 'पिता' "पर्जन्यः" द्युलोकाख्यः, द्यौरेव हि रसान् प्रार्जयति, तस्मात् सैवात्र पर्जन्यशब्देन भाष्यकारेणोक्ता। 'दुहितुः' "पृथिव्याः" उपरि 'गर्भं' 'सर्वभूतगर्भोत्पत्तिहेतुभूतोदकम् 'आधात्' आदधाति, ददातीत्यर्थः। अत्र पृथिव्येव दुहितृशब्देनोक्ता सा हि द्युलोकात् 'दूरे निहिता' अथवा सा हि द्युलोकं 'दोग्धीति' दुहिता,—सा हि द्युलोकात् पतितमुदकमुपजीवत्येवादूरे निहिता, दोग्धि वा॥ एवं द्यावापृथिवीभ्यामन्तरिक्षेण चावकाशदानेनानुगृह्यमाणान्येतान्यस्मदादीनि भूतान्युत्पद्यन्त इति एतदनेन मन्त्रेण मन्त्रद्रुशा ख्या-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पितम्। अत्र मातृपितृसम्बन्धात् पितृशब्दः पितर्य्येवेत्युपपत्तिः। पिता माता चायमेतदाशासनं मन्येत ॥

"शंयोः (४८)"—इति। एतदनवगतम्। पञ्चम्यन्तं वा षष्ठ्यन्तं वा सत्। निगमश्चैषः,—"बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम्। त आ गतावसा शन्तमेनाथा नः शंयोररपो दधात ॥"—इति ( ऋ० सं० ७, ६, १७, ४ )। न चैवं यजमानोऽर्थात्तस्माद् बृहस्पतिपुत्रादर्थमपेक्षते, किं कारणम्? स्वत एव हि ते विधातुं समर्थाः, न च बृहस्पतिपुत्रस्य शंयोः मम पितरः किञ्चिदेभिः पितृभिः विधीयेतेति। एवं पञ्चम्यर्थासम्भवं षष्ठ्यर्थासम्भवञ्च पश्यन् भाष्यकारः, 'शंयोः'—इत्येकं पदं, द्वितीयान्ते द्वे पदे चकार, 'शम्'—इति, 'योः'—इति च। शमित्यस्य "शमनम्" अर्थं निराह, योरित्यस्य "यावनम्"—इति। एवं द्वितीयान्ते परिणामं कृत्वा अर्थं निराह,—तथाहि वाक्येन सम्बध्यत इति। कस्य शमनं कस्य वा यावनम्? इति पुनः पर्य्यनुयोगे प्राप्ते "रोगानाम्" "भयानाम्" "च" इत्यध्याजहार भाष्यकारः। रोगशमनञ्च दधात, भययावनञ्च, शान्तरोगा यथा स्याम, प्रहीणसर्वभयाश्च, तथा कुरुतेत्यभिप्रायः। किमेतावदेव? नेत्युच्यते,—यदपि चान्यत् किञ्चित् 'अपरः' अपापम्, तदपि चास्मभ्यमेव 'दधात' दत्तेत्यर्थः ॥ एवमेतत् पदम् एकम्, अर्थासम्भवाद् द्विधा प्रविभज्य भाष्यकारेण निरुक्तम्। इत्थमप्यर्थासम्भवे सति निर्वचनप्राप्तिरस्त्येव, तद्यथा उद्गीथशब्दे,—"प्राण एवोत्प्राणेन ह्युत्तिष्ठति, वाग् गीर्वाचो ह गिर इत्याचक्षतेऽत्र-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मथान्नेन हीदं सर्वं स्थितम् (छा० ब्रा० ३, ३)"—इत्येवमादि, तस्मादुपपद्यते। प्रथमान्तमेव सत् कस्माद् द्वितीयान्तत्वेन विपरिणम्यते शंयुमिति ? एवमपि न विरुध्यति, तथापि हि न कश्चिदर्थ उपपद्यते, तस्माद् युक्तमिति ॥ "रपो रिप्रम्"—इति, अत्र रिप्रशब्दस्य 'रपःशब्देनार्थसामान्यात् तरवमुक्तम्। यदेवास्य 'रिप्रम्' अमेध्यम्, तच्छुध्यतीति ह विज्ञायते ॥

"अथापि शंयुर्बार्हस्पत्य उच्यते" अपि शं, योः,—इत्यनेन पदद्वयेन शमनयावने रोगभययोः उच्येते, द्वेधा प्रविभक्तेन, अपि यथावस्थितेनैवाविभक्तेन वार्हस्पत्यो बृहस्पतेः पुत्र उच्यते, तस्याप्येतदेव नामेत्यपिशब्दः। "तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये"—इति। "ओमानं शंयोर्ममकाय सूनवे (ऋ० सं० १, ३, ४, ६)" इति, "तच्छंयोः सुम्नमीमहे (ऋ० सं० १, ३, २६, ४)"--इति च निगमौ। इयं शक्वरी। शंयोरेव बृहस्पतिपुत्रस्यार्षम्। शंयोर्वाके विनियुक्ता। शंयोरात्मानमभिसम्पाद्य, अथवा शंयोः सकाशादिति केचिन्मन्यन्ते। अनेन कर्मणा 'शंयोः' वाकाख्येन 'तत्' तदा आभिमुख्येन 'वृणीमहे'। किं पुनस्तत् ? 'गातुं यज्ञाय' "गमनम्" अस्मै "यज्ञाय" देवान् प्रति, 'गातुं यज्ञपतये' "गमनं" चास्मै "यज्ञपतये" देवान् प्रति। किञ्च, 'दैवी स्वस्तिरस्तु नः' देवानुग्रहादस्माकं स्वस्तिरस्तु, मा नो देवाः काञ्चिदापदमुत्पादयन्त्वित्यभिप्रायः। 'स्वस्ति मानुषेभ्यः' मनुष्येभ्योऽपि सकाशात् मा नः काचिदापदस्तु। 'ऊर्ध्वं जिगातु भेषजम्' गच्छत्वेतद्भेषजम् भयसादयितृ कर्म, यावज्जी-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वमनवच्छिन्नञ्चविगुणञ्चोद्दर्ध्वगमनयोग्यम् अस्माकमस्त्वित्यभि-प्रायः। किञ्च, 'शन्नो अस्तु' शं सुखं नोऽस्माकं भवतु, 'द्विपदे' मनुष्यादिकाय 'चतुष्पदे' गवादिकाय च॥ 'शंयुः' बृहस्पति-पुत्रः--इति, एतस्मिन् मन्त्रे विशेषलिङ्गमस्ति, तदन्यस्मात् श्रुति-लिङ्गात् कुतश्चिदुपलभ्यमानाद्वा एतावदेव त्वेतस्मात् मन्त्रात् सिद्धम्,—एकमेवेदं पदमविभक्तम् निरुच्यते, पञ्चम्यन्तं वा षष्ठ्यन्तं वा, न यथा पूर्वस्मिन् मन्त्रार्थासम्भवाच्छंयुशब्दो विभक्त इति॥ ५ (२१)॥

इति निरुक्तवृत्तौ नवमस्याध्यायस्य (चतुर्थाध्यायस्य) तृतीयः पादः॥ ४, ३॥

---

## चतुर्थ पादः॥

### अदितिरदीना देवमाता ॥ १ (२२)॥

"अदितिः (४६)"—इति। एतदनवगतम्। "अदीना"—इत्यवगमः। "देवमाता" अभिधेया, ऐतिहासिकपक्षेण, नैरुक्त-पक्षेणपुनर्यान्येतस्यामविवक्ष्यमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्ते एतान्येवादितिशब्दनोच्यन्ते॥ १ (२२)॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदि-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तिर्जनित्वम् ॥ इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा। यमेरिरे भृगवः। एरिर इतीर्त्तिरुपसृष्टोऽभ्यस्तः ॥ २ (२३) ॥

"अदितिर्द्यौः० ०मदितिर्जनित्वम्" (ऋ० सं० १, ६, १६, ५)। राहुगणस्य गोतमस्येयमार्षम्। तृतीयसवने सर्वस्तोमेष्वेव, वैश्वदेवस्य शस्त्रस्य परिधानीयैषा। 'अदितिः' एव देवमाता 'द्यौः' 'अदितिः' अदितिरेव च 'अन्तरिक्षम्' 'अदितिः' एव 'माता' सर्वभूतनिर्मात्री, 'सः' एव च 'पिता' पालकः, 'सः' एव हि 'पुत्रः' सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुनः पापात् त्रायते, अथवा सैव निपृणाति, सर्वभूतानां यन्निर्वर्त्तव्यं दातव्यमित्यर्थः। येऽपि चैते 'विश्वेदेवाः' सर्वे देवाः, एतेऽपि 'अदितिः' एव। 'पञ्चजनाः' गन्धर्वादयः 'अदितिः' एव। सर्वथापि किं बहुना, यावदेतत् किञ्चित् 'जातं' च 'जनित्वं' च जनिष्यमाणञ्च सर्वमप्येतत् 'अदितिः' एव। एवमनेन मन्त्रेण मन्त्रदृक् "अदितेर्विभूतिमाचष्टे" देवमातुस्तत् सर्वमप्युपपद्यत एव, माहाभाग्याद् देवतायाः। तदुत्तरत्र वक्ष्यामः। एवमैतिहासिकपक्षेण, नैरुक्तपक्षेण पुनः "एतानि" द्युलोकादीनि सर्वाणि "अदीनानि" अनुपक्षीणानि इति योज्यम्, न ह्येषां क्षयोऽस्तीति ॥

"एरिरे (५०)"—इति। एतदनवगतम्। "आ ईरिरे"—इत्यवगमः। "यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वरुणो न राजति ॥"—इति (ऋ० सं० २, २, २, ४)। दीर्घतमस इयमार्षम्। जगती। प्रातरनुवाकाश्विनयोरग्निमारुते च शस्यते। 'यम्' अग्निमाभिमुख्येन ईरितवन्तः, प्रेरितवन्तः, स्थापितवन्त इति यावत्, आत्माभिप्रेतार्थसिद्धये 'भृगवः'। 'विश्ववेदसं' सर्ववेदसं, सर्वस्य वेत्तारं, सर्वधनं वा। क्व पुनः 'एरिरे'? 'नाभा' पृथिव्याः नाभौ अवस्थितम्, उत्तरवेदिमध्यगतायाः पृथिव्या वेद्या उपरि। केन पुनरेरिरे? 'भुवनस्य' उदकस्य 'मज्मना' मननीयेन वीर्य्येणान्नेन. हविर्लक्षणेन। किं तस्य? 'तमग्निं' हे यजमान! त्वमपि 'गीर्भिः' वाग्भिः स्तुतिलक्षणाभिः आभिमुख्येन स्थित्वा 'हिनुहि' प्रेरय। तस्मिन् तस्मिन् कर्मणि वर्त्तमानमग्निहोत्रादौ, यथा भृगवः ईरितवन्तः, तथा 'स्वे दमे' स्व एव गृहे, मा कस्यचिदार्त्विज्येऽवस्थित इत्यभिप्रायः। किंलक्षणं पुनरग्निमाहिनुहि? 'य एको वस्वः' एक एव यो वसुनो धनस्य दाता। 'वरुणो न' वरुण इव, यथा वरुणः समुद्रान्तर्गतानां धनानाम् इष्टे, एवं यः सर्वस्येव धनस्य 'राजति' इष्टे इत्यर्थः। राजतिरैश्वर्य्यकर्मसु पठितः,—"क्षियति (३), राजति (४)"—इति। "एरिरे—इति" "ईर्त्तिः" अयं धातुर्गतिकर्मा,—"ईर्त्ते (७६), ऋयति (८१)"—इति गतिकर्मसु पठितम्। स पुनरयमाङोपसर्गेण, "उपसृष्टोऽभ्यस्तः" च, पुनः पुनरीरितवन्त इत्यर्थः ॥ २ (२३) ॥

उत स्मै नं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भरेषु। नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम्॥ अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनं वस्त्रं वस्तेस्तायुरिति स्तेननाम संस्त्यानमस्मिन् पापकमिति नैरुक्तास्तस्यतेर्वा स्यादनुक्रोशन्ति क्षितयः संग्रामेषु भर इति संग्रामनाम भरतेर्वा हरतेर्वा नीचायमानं नीचैरयमानं नीचैर्निचितं भवत्युच्चैरुच्चितं भवति जस्तमिव श्येनं श्येनः शंसनीयं गच्छति। श्रवश्चाच्छा पशुमच्च यूथम्। श्रवश्चापि पशुमच्च यूथं प्रशंसां च यूथं च धनं च यूथं चेति वा यूथं यौतेः समायुतं भवति। इन्धान एनं जरते स्वाधीः। गृणाति मन्दी मन्दतेः स्तुतिकर्मणः। प्रमन्दिने पितुमदर्चता वचः। प्रार्चत मन्दिने पितुमद्वचो गौर्व्याख्यातः॥ ३ (२४)॥

"जसुरिः (५१)"—इति। एतदनवगतम्। "जस्तम्"—इत्यवगमः। "उत स्मैनं"—इति निगमः (ऋ० सं० ३, ७, ११, ५)। वामदेवस्यार्षम्। त्रिष्टुप्। दधिक्राव्णे सूक्ते। दधिक्रावा चेन्द्र एव, वायुर्वा मध्यस्थानत्वात्। 'उत स्मैनम्' अप्येनमिन्द्रम् 'अनुक्रोशन्ति' आभिमुख्येन क्रन्दन्ति, आह्वयन्ति। 'क्षितयः' मनुष्याः। क्व? 'भरेषु' संग्रामेषु। कथं पुनरभि-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्रन्दन्ति ? 'वस्त्रमथिं न' वस्त्रापहर्त्तारमिव 'तायुम्' यथा केचिज्जनाः कश्चिद्वस्त्रापहर्त्तारं तायुं दृष्ट्वा कश्चिदन्यमात्मनस्त्राणार्थमभिक्रन्देयुः, एवमेतमिन्द्रम् अभिक्रन्दन्ति संग्रामेषु, परैरप्यर्द्यमानास्त्राणार्थमात्मनः। किञ्च, अपि चैनं तायुं 'नीचायमानं' नीचैर्गच्छन्तं 'जसुरिं न' जसुरिमिव, "जस्तमिव" 'श्येनं' बद्धम्, स्नायुतन्तुना य एव याजिक इति प्रसिद्धो राज्ञाम्, स हि बद्धत्वादुत्पतितुमत्यर्थं न शक्नोति, नीचैरेव गच्छति, गत्वा च शशकादीनि हिनस्ति सत्त्वानि। स यथा जनैरभिक्रन्द्यते, तथा चैनमभिक्रन्दति। आह,—कमर्थमभिसन्धाय ? इति। उच्यते,—'श्रवश्च अच्छ' कीर्त्तिश्चाभिसन्धाय, कथं नाम श्रूयेमहि ? प्रशस्येमहि जितमेभिरित्येतमर्थमभिसन्धाय। 'पशुमच्च यूथम्' अनेकपशुजातिसंयुक्तं पशुयूथमभिसन्धायैतदस्माकं स्यादित्येवमभिक्रन्दतीत्येष समस्तार्थः॥

अथैकपदनिरुक्तम्। "वस्त्रं वस्तेः" आच्छादनार्थस्य (अदा० आ०), तद्ध्यनेनाच्छाद्यते। "तायुरिति"—एतत् "स्तेननाम" "संस्त्यानं" संहतम् "अस्मिन् पापकं" भवति "इति" एवं "नैरुक्ता-" मन्यन्ते। "तस्यतेः वा स्यात्" क्षयार्थस्य (दि० प०), उपक्षीणो ह्यसौ भवति, अधार्मिकत्वात्, परलोकमनपेक्ष्य कल्पयति कर्माणि। क्षितयो मनुष्याः। "भर इति संग्रामनाम" भ्रियन्ते तस्मिन् योद्धारः "हरतेः वा" ह्रियन्ते हि तस्मिन् जीवितानि, वसूनि च। "श्येनः शंसनीयं गच्छति" शीघ्रत्वात्। "यूथं यौतेः" तद्धि "समायुतं भवति" एकत्र मिश्रीभूतं स्त्रीपुरुष-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बालवृद्धैः पशुभिः ॥ एवमिह नीचायमानं श्येनमित्यनेन सम्बन्धाज्जसुरिर्बद्ध इत्युपपद्यते न ह्यबद्धः श्येनो नीचैरयते ।

"जरते (५२)"—इति । एतदनवगतम् । धातोरस्वार्थे प्रवृत्तिरेवानवगमः । "दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥"—इति (ऋ० सं० ७, ८, २८, १)। वत्सप्रिर्भालन्दनः, तस्येयमार्षम् । उक्थस्याग्नेरुपस्थाने विनियुक्ता । 'दिवस्परि' 'दिवः' द्युलोकादित्यर्थः । 'प्रथमम्' अग्रम् 'अग्निः' 'जज्ञे' आदित्यात्मना । 'द्वितीयम्' 'अस्मत् परि' अस्मदधि, अस्मत्तो जायते, पार्थिवात्मना । 'तृतीयम्' 'अप्सु' अन्तरिक्षलोके वैद्युतात्मना जायते । "आपः"—इति ह्यन्तरिक्षनामसु पठितम् । नृणां मनस्यवस्थितः 'नृमणाः' नृषु वा मनोऽस्य, स नृमणाः । योऽयमेक एव त्रिषु स्थानेषु जायते, तमेवङ्गुणयुक्तं 'स्वाधीः' शोभनधीः 'इन्धानः' 'अजस्रं' नित्यं 'जरते' स्तौति, यः, स एव 'स्वाधीः' सुप्रज्ञ इत्यर्थः । इन्धानो हि किमन्यत् स्तुतेः कुर्यात् ? तस्मात् "जरते"—इत्यस्य शब्दस्य "गृणाति"—इत्यर्थ उपपद्यते ॥

"मन्दिने (५३)"—इति । एतदनवगतम् । "मन्दतेः" स्तुत्यर्थस्य । मन्दनीयः स्तुतिमान् वेत्यर्थप्रतीतिः । "मन्दति (१८), शंसति (२५)"—इति स्तुतिकर्मसु पठितम् । "प्रमन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना । अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे ॥"—इति (ऋ० सं० १, ७, १२, १)। कुत्सस्येयमार्षम् । छन्दोमेषु

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तृतीयेऽहनि मरुत्वतीये शस्त्रे निविद्धानीयसूक्तस्य प्रथमैषा। हे स्तोतारः! 'प्रार्चत' प्रकर्षेणोच्चारयत, पूजयत। 'मन्दिने' मन्दनीयाय, स्तुत्याय, स्तुतिमते वा इन्द्राय। 'पितुमत्' अन्नसंयुक्तं 'वचः'। 'यः' इन्द्रः, किं करोति? कृष्णस्य मेघस्य गर्भभूता अपः 'निरहन्' नीचैरहन्, निरगमयदित्यर्थः। केन? 'ऋजिश्वना' ऋजुरेवावक्षिप्तो लक्ष्ये यः श्वनति गच्छति इति ऋजिश्वा वज्रः, तेन निरगमयत्। 'अवस्यवः' अवनमात्मनो रक्षणमिच्छन्तः, तर्पणं वा। योऽयमेवम्प्रभाव इन्द्रः, तमिमं 'वृषणं' वर्षितारम्, 'वज्रदक्षिणं, वज्रबाहुम्, 'मरुत्वन्तं' मरुत्सहितम्, 'सख्याय' सखिभावाय 'हवामहे' तासु तासु क्रियासु आह्वयामहे इत्यर्थः॥ एवमेतस्मिन् मन्त्रे "मन्दिने पितुमद्वचः प्रार्चत'—इत्येतस्माद्वाक्यसम्बन्धादिन्द्रविशेषणमेतदित्युपपद्यते॥

"गौः (५४)"—इति। एतदनेकार्थत्वादिह समाम्नातम्। यथा चैतदनेकार्थत्वं तथा पुरस्तात् "व्याख्यातम्"॥ ३ (२४)॥

अत्रा॒ ह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्य॑म्। इ॒त्था च॒न्द्रम॑सो गृ॒हे॥ अत्र॒ ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे गातुर्व्याख्यातः (गा॒तुं कृ॒णव॑न्नु॒षसो॒ जना॑येत्यपि निगमो भवति) दंसयः कर्माणि दंसयन्त॑ एना॒नि। कु॒त्साय॒ मन्म॒न्नह्य॑श्च द॒ंसय॒ इ॒त्यपि नि॒गमो॒ भवति। स तू॒ ताव॒

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नैनमश्नोत्यंहतिः। सतुताव नैनमंहतिरश्नोत्यंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद् विपरीतात्। बृहस्पते चयस इत्पियारुम्। बृहस्पते यच्चातयसि देवपीयुं पीयतेर्हिंसाकर्मा वियुते द्यावापृथिव्यौ वियवनात्। समान्या वियुते दूरे अन्ते। समानं सम्मानमात्रं भवति मात्रा मानाद् दूरं व्याख्यातमन्तोऽततेऽर्धगिति पृथग्भावस्य प्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते। ऋधगया ऋधगुताशमिष्ठाः। ऋध्नुवन्नयाक्षीऋध्नुवन्नशमिष्ठा इति चास्या इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम् अस्या ऊ षु ण उप सातये भुवोऽहेलमानो ररिवाँ अजाश्व (श्रवस्यतामजाश्व)॥ अस्यै नः सातयः उपभवाहेलमनोऽक्रुध्यन्ररिवान्रातिरभ्यस्तोऽजाश्वेति पूषण माहाजाश्वाजा अजना अथानुदात्तम्। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्। दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतं शरच्छृता अस्यामोषधयो भवन्ति शीर्णा आप इति वाऽस्येत्यस्या इत्येतेन व्याख्यातम् ॥४(२५)॥

यत्तूक्तम्,—"अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, ०—० सोऽपि गौरित्युच्यते,—'अत्रा ह गोरमन्वतेति' तदुपरिष्टा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दुर्व्याख्यास्यामः"—इति, तदिदमुच्यते,—"अत्रा ह"—इति। गोतमस्य राहुगणस्येयमार्षम्। अग्निचयने इष्टकोपधाने विनियुक्ता। 'अत्रा ह' अत्रैव, एतस्मिंश्चन्द्रमण्डले 'गो' सुषुम्नस्यैकस्य सूर्य्यरश्मेः, इतरे सूर्य्यरश्मयः 'अमन्वत' अमन्यन्त, समनुज्ञातवन्त इत्यर्थः। किं पुनस्तत् सममन्यन्त 'नाम' नमनं प्रह्वणमवस्थानमित्यर्थः। कुतः? 'त्वष्टुः' आदित्यस्य स्वभूता रश्मयः समन्यन्त। कथं तस्य नमनं तत् सममन्यन्त? इति 'अपीच्यम्' "अपगतं" तत्रैव चन्द्रमण्डलेऽन्तःप्रविष्टस्य यदवस्थानान्तरं तत् सममन्यन्त। अथवा अपीच्यमिति "अप" एत्य सूर्य्यमण्डलात् चन्द्रमण्डले "चितम्" अपीच्यम्। अथवा अपीच्यम् "अन्तर्हितम्" इत्यर्थः, "प्रतीच्यम् (५), अपीच्यम् (६)"—इति अन्तर्हितनामसु पठितम्। क्व पुनरन्तर्हितस्यान्यत्रावस्थानम्? इति 'इत्था चन्द्रमसो गृहे' अमुष्मिंश्चन्द्रमण्डले इत्यर्थः॥

"गातुः (५५)"—इति। "व्याख्यातः" "गमनं यज्ञपतये"—इत्यत्र॥

"दंसयः (५६)"—इति। एतदनेकेषां कर्मणां अभिधानम्। तानि हि दंसयन्त्युपक्षयन्ति कर्मकराः। "तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम्। यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः॥"—इति (ऋ० सं० ८, ७, २६, १)। अङ्गस्यौरवस्येयमार्षम्। हे 'इन्द्र' 'तव' 'त्ये' 'वह्नयः' वोढारोऽश्वाः, 'सख्येषु' समानख्यानेषु कर्मसु वर्त्तमानाः, इदमेव हि भवतः कर्म, मेघो विदारयितव्य इति, एतदेव तेषामपि समानख्यानत्वम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'ऋतम्' उदकमस्मिन्नस्तीति, एवमेतं 'मन्वानाः'। किमकुर्वन्? 'व्यदर्दिरुः' विदारितवन्तः 'वलं' मेघं काले काले। 'यत्र' यस्मिन् मेघे विदारिते 'दशस्यन्' दशस्यन्ति 'उपसः' माध्यमिकाः एकस्या एव पूजनार्थे बहुवचनम्। किं दशस्यन्? 'अपः' 'अह्यः च' अहिनिवासिन्यः, मेघनिवासिनीरित्यर्थः। ताश्च दीर्य्यमाणाः 'रिणन्' आगच्छन्, पृथिवीलोकम्। तदेतत् सर्वमपि युष्मदश्वैः क्रियते। किं पुनरर्थमुद्दिश्य त एवं कुर्वन्ति? 'मन्मन्' मन्यमानाः, 'कुत्साय' पृथिवीं कृन्तते, कृषीवलाय, 'दंसयः' कृषिकर्माणि सफलानि कर्त्तुम्। अत्र 'दंसयः'—इत्येतेन शब्देन "कर्माणि" उक्तानि। दासैः कर्मकरैः, 'दस्यन्ते'—इति कृत्वा कर्मकरा दासा इति। बाहुल्याद् भाष्यकारेण निगमोऽत्र-नोदाहृतः॥

"तूताव (५७)"—इति। एतदनवगतम्। "तुताव" इत्यवगमः। "यस्मै त्व मा यजसे स साधत्यनर्वा क्षेति दधते सुवीर्य्यम्। स तूताव नैनमश्नोत्यंहुतिरग्ने सख्ये मा रिषामा वयं तव॥"—इति (ऋ० सं० १, ६, ३०, २)। कुत्सस्येयमार्षम्। महाव्रते आग्निमारुते शस्त्रे जातवेदस्ये सूक्ते शस्यते। हे भगवन्! 'अग्ने!' 'यस्मै' यजमानाय 'त्वम्' 'आ' आहूय 'यजसे' देवान्, होतृत्वेऽवस्थितः। 'सः' एव 'साधति' 'साधयत्यात्मनोऽभिप्रेतार्थम्। किञ्च, स एव 'अनर्वा' अप्रत्यृतः, अनाश्रितः कञ्चिदन्यम्, स्वेनैव महिमायुक्तः। 'क्षेति' निवसति, युष्मदनुग्रहात्। स एव 'दधते' धारयते 'सुवीर्य्यं' शोभनमा-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्मनो वीर्य्यम्। स एव 'तूताव' वर्द्धते, प्रजाधनयशोभिः, 'न' च 'एनम्' 'अंहतिः' अपि पापमपि सम् "अश्नोति" आप्नोति। हे भगवन्नग्ने! यः त्वमेवमतिमहानुभावः, तस्य 'तव' 'वयं' 'सख्ये' सखिभावे, परिचरणकर्मणि वर्त्तमानाः 'मा रिषाम' मा केनचिच्छिद्यमहि॥ एवमयमत्र "तूताव"—इति शब्दः 'यस्मै त्वमा यजसे'—इत्येवमादीनां पदानां मध्ये श्रूयमाणो वृद्ध्यर्थमुपपद्यते॥ "अंहतिश्च अंहश्च अंहुश्च"—इत्येते शब्दाः "हन्तेः" "निरूढोपधात् विपरीतात्" अकारमुपधातोर्निष्कृष्यादौ कृत्वा, ततो हकारनकारौ विपर्य्ययेण भवतः॥

"चयसे (५८)"—इति। एतदनवगतम्। "चातयसि"—इत्यर्थप्रतीतिः। "ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः। न दूढ्ये अनुददासि वामं बृहस्पते चयस इत् पियारुम्॥"—इति (ऋ० सं० २, ५, १२, ५)। अगस्त्यस्य मैत्रावरुणस्येयमार्षम्। हे 'बृहस्पते!' 'देव' दानादिगुणयुक्त! 'ये' यजमानाः त्वाम् 'उस्रिकम्' उत्स्राविणं भोगानां 'मन्यमानाः' दातैव केवलं भोगानाम्, अयमार्जवेन न प्रत्युपकारार्थीत्येवं मन्यमानाः, 'पापाः' अप्रत्युपचिकीर्षवः 'उपजीवन्ति' एव केवलं, न क्रियया प्रत्युपकारं कुर्वन्ति, 'भद्रं' भन्दनीयं स्तुत्यम्, अपि च 'पज्राः' प्रार्जितधनाः सन्तः, न दरिद्राः। किं तेभ्यः? इति 'न दूढ्ये' न तेभ्य एवंलक्षणेभ्यः, दुर्धीभ्यः, पापबुद्धिभ्यः, स्वार्थप्रधानेभ्यः त्वम् 'अनुददासि' 'वामं' वननीयं धनम्। किं तर्हि? यस्तादृशो जनः 'पियारुः' देवपीयुः, देवहिंसिता, स्वभोगप्रधानः,


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

न यष्टा देवानाम्, तं 'चयसे' "चातयसि" नाशयसि। य एव श्रद्दधानो यष्टा, तस्मै देवान् यजते अनुददासि वार्मम्, यस्मात् त्वमेवं करोषि, तस्मात् ते पापबुद्धयः त्वां सम्यक् न पश्यन्तीत्यभिप्रायः। यो हि दुर्बुद्धिः देवपियारुः तस्य किमन्यत् चातनादृते स्यात्? चात्य एवासौ॥ तस्मात् 'चयसे'—इत्येष शब्दः, "चतयतिः" नाशने इत्येवमस्थापिते नाशनार्थो भवतीत्युपपद्यते, "चातयतिर्नाशने"—इति हि वक्ष्यति। लोकेऽपि च प्रसिद्धं देशादुच्चातित इति। तस्मादुपपद्यते॥

"वियुते (५६)"—इत्येतदेकमेव समस्तयोर्द्वयोरपि द्यावापृथिव्योरभिधानम्। "वियवनात्"—इति निर्वचनम्। यौतिर्मिश्रणार्थः (अदा० प०) तस्योपसर्गसामर्थ्याद्विपर्ययेणार्थो भवति, विमिश्रीभूते इत्यर्थः। "इमे वै सहास्तां ते शस्यामात्रं न्यैतामिति ह विज्ञायते"। "समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुर्जागरूके। उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम॥"—इति (ऋ० सं० ३, ३, २५, २)। विश्वामित्रस्येयमार्षम्। वैश्वदेवे सूक्ते। 'समान्या' समान्यावेते द्यावापृथिव्यौ, समानपरिमाणे। 'वियुते' च विमिश्रीभूते। 'दूरे अन्ते' च, न हि द्यावापृथिव्योरन्तोपलब्धिरस्ति। 'ध्रुवे पदे' सप्तम्येकवचनम्, अन्तरिक्षविषयम्, ध्रुवं शाश्वतम्, एतस्मिन् पदे आधारभूते, अन्तरिक्षस्य क्षयो नास्ति, प्रतिद्वन्द्वाभावात्, तच्चैतयोर्द्यावापृथिव्योः प्रतिष्ठा, तस्मिन्नेते 'तस्थतुः' स्थितवत्यौ। सर्गादारभ्य 'जागरूके' जागरणशीले, स्वं स्वमधिकारं प्रति। 'उत'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अपि चैते 'स्वसारौ' भगिन्यौ, सहोत्पत्तित्वात्। 'युवतीभवन्ती' सम्मिश्रीभवन्त्यौ, परस्परसम्भोगेन। 'आद्रु उ ब्रुवाते मिथुनानि नाम' इति। अथैवमेते 'वियुते' च सम्मिश्रीभूते च सत्यौ, द्यावापृथिव्यौ, ब्रुवाते इव, प्रथयत इव, स्तोस्तृणां 'नाम' नामानि, आत्मनः 'मिथुनानि' द्विवचनसम्बद्धानि स्तुतिनामभिः,—स्वधे (१), पुरन्धी (२)"—इत्येवमादिभिरिति॥ एवमेतस्मिन् मन्त्रे "वियुते"—इत्यस्य पदस्य द्यावापृथिवीविशेषणत्वम्, द्यावापृथिवीशब्दश्चात्राध्याहार्य्यः, 'दूरे अन्ते'—इत्येवमादीनां तथोपपत्तिदर्शनात्॥

"ऋधक् (६०)"—इति। अनेकार्थम्। "ऋधगिति पृथग्भावस्य प्रवचनं भवति" पृथक्त्वमेव पृथग्भावः, तस्येदं प्रवचनं भवति, सोऽनेन प्रोच्यते इत्यर्थः। "यदिन्द्र दिवि पार्य्ये यदृधग् यद्वा स्वे सदने यत्र वासि। अतो नो यज्ञमवसे नियुत्वान् सजोषाः पाहि गिर्वणो मरुद्भिः॥"—(ऋ० सं० ४, ७, १२, ५)। भरद्वाजस्येयमार्षम्। पृष्ठ्यस्य पञ्चमेऽहनि मरुत्वतीये निविद्धानीये सूक्ते शस्यते। हे भगवन्! 'इन्द्र!' 'यत्' यदि त्वं 'दिवि' द्युलोके 'पार्य्ये' पारणीये स्थानेऽवस्थितः, 'यदृधक्' यदि ऋधक् पृथगिव इत्यर्थः। 'यद्वा' यदि वा 'स्वे सदने' अन्तरिक्षलोकेऽवस्थितः। 'यत्र वासि' क्वचिदन्यत्रैव स्थानेऽवस्थितः, को हि तत्त्वतो वेद, तव स्थानं यत्रासीति। किं बहुना, यत्र यत्रासि अवस्थितः, 'अतः' आगत्य 'यज्ञम्' 'अवसे' रक्षसि। 'नियुत्वान्' वायुर्भूत्वा। यस्त्वमेवम्प्रभावः, त्वां तु ब्रवीमि,—हे 'गिर्वणः'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गीर्भिः सम्भजित! स हि स्तुतीः सम्भजति, स्तुतिभिर्वा सम्भज्यते, 'सजोषाः' सहजोषणः सप्रीतिः, 'मरुद्भिः' पिबैतं सोममस्मत्प्रत्तम्। एवमेके पृथग्भावोदाहरणमेतमृचं व्याचक्षते॥

अपरे पुनर्य एवैष भाष्यकारेण निगमः पठितः,—"ऋधगयाः"—इति, अत्रैवेतौ द्वावप्यर्थाविति मन्यन्ते, तथापि दर्शयिष्यामस्तस्यामेवर्चि "अथापि" अथमेवमृधगिति शब्दः कदाचित् "ऋध्नोत्यर्थे" अपि "दृश्यते"—"ऋधगया ऋधगुताशमिष्ठाः" इत्यस्मिन् मन्त्र। "वयं हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह। ऋधगया ऋधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान् स्वाहा॥"—इति (य० वा० सं० ८, २०)। समिष्टयजुःषु सौमिकेषु विनियुक्ता। तत्र चोक्तम्,—"एतौ विश्वामित्रो यज्ञस्यारणी अपश्यत्"—इति। हे भगवन्! 'अग्ने!' 'यत्' प्रयोजनमुद्दिश्य 'अद्य' 'प्रयति' प्रोत्सर्पति एतस्मिन् 'यज्ञे' 'वयम्' 'अवृणीमहि' वृतवन्तः 'होतारं' त्वाम्। "अग्निर्देवो दैव्यो होता"—इति श्रूयते। किं पुनस्तत् प्रयोजनम्? इति। कथं नामाल्पमप्यवदानमात्रं हुतं देवतातृप्तिसमर्थं बहु कुर्य्यादशान्तमपि च यद् विगुणं यज्ञस्य किञ्चित् तच्छमयित्वा समृद्धमेव कुर्य्यात्? इति, तच्चोभयमपि यथाशास्त्रमेवास्माकं त्वया कृतम्, अत इदानीं परिसमाप्ते एतस्मिन् यज्ञे प्रत्यभाष्यसे अस्माभिः,—'ऋधगयाः' त्वम्, अल्पमपि हुतम् अस्माभिः हविः, 'अधंक्' एव ऋद्धमेव, देवतातृप्तिसमर्थं बहु कुर्वन् 'अयाः' त्वं यागमकार्षीरित्यर्थः। किञ्च, 'ऋधगुताश-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मिष्ठाः' अपि च यदपि किञ्चिद्विगुणम् अकार्ष्म, वयमेतस्मिन् यज्ञे, तदपि सर्वमेव समृद्धं सगुणमेव कुर्वन्, पापमस्य यज्ञस्य अशमिष्ठाः स्विष्टकृद्रूपेण शमितवानसि। यस्त्वमेतदकार्षीरस्माकमेतस्मिन् यज्ञे, तं, त्वां ब्रवीमि,—एतदेव मयैतेषां कर्त्तव्यमित्येतत् 'विद्वान्' 'प्रजानन्' प्रकर्षेण जानन् अस्माकमात्मन उपरि भक्तिं पुनः पुनः 'उपयाहि' उपागच्छ 'यज्ञम्'॥ एवं तावदेकेषाम् "ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतौ द्वावपि "ऋधक्"शब्दौ ऋध्नोत्यर्थावेव। एतस्मिन्नर्थे, ऋधक्छब्दस्य पृथग्भावार्थत्वे "यदिन्द्र दिवि पार्ये यदृधक्"—इत्येतदुदाहरणम्। अन्ये पुनर्मन्यन्ते,—"ऋधगयाः, ऋधगुताशमिष्ठाः"—इत्येतयोरेव ऋधक्छब्दयोः पूर्वः पृथग्भावार्थः, उत्तर ऋध्नोत्यर्थ इति। तदेतदुपपद्यते, मिश्राण्यपि हवींषि हुतानि सन्ति, त्वमग्ने ऋधक् पृथगेव कृत्वा ततो देवानयाक्षीर्न ते सम्मोहोऽस्तीत्यभिप्रायः। 'ऋधगुताशमिष्ठाः'—इत्येष यथाव्याख्यात एव। पूर्वस्त्वर्थः साधीयान्, यत्र द्वावप्येतावृध्नोत्यर्थावेव,—"ऋधगयाः" "ऋधगुताशमिष्ठाः"—इति। किं कारणम्? "अथाप्यृध्नोत्यर्थे दृश्यते"—इति एवमुपन्यस्य भाष्यकारेण ततोऽयमुपात्तो निगमः,—"ऋधगया ऋधगुताशमिष्ठाः"—इति, एवञ्च निरुक्तम्—"ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठाः"—इति। तस्मात् द्वावप्येतावृध्नोत्यर्थावित्येतदेव साधीयः॥

"अस्याः (६१)"—इति, "अस्य (६२)"—इति च। पदद्वयं स्त्रीपुंसविषयम्, स्वरकृतात् विशेषात् प्रधानाभिधायि वा भवति।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आह,—कथम्? इति उच्यते,—"उदात्तं प्रथमादेशे"। प्रथम इति मुख्यनाम, मुख्यं प्रधान उच्यते, प्रधानं कञ्चिदर्थमभिदधत् एतद् द्वयमुदात्तं भवति। "अनुदात्तमन्वादेशे"। प्रधानमर्थमनु यो वर्त्तते गुणभावेन तस्यैतत् पदद्वयमन्वादेशे वर्त्तमानमनुदात्तं भवति। आह,—कस्मादेतत् पुनरुदात्तं प्रधाने वर्त्तमानमनुदात्तमप्रधाने? इति। उच्यते,—लोकेऽपि हि यत् "तीव्रार्थतरम्" उत्कृष्टार्थप्रधानतरं तत् "उदात्तम्"—इति प्रसिद्धम्, तद्यथा,—उदात्तमेतत् कुलमिति। "अल्पीयोऽर्थतरमनुदात्तम्" अल्पीयसार्थेन यद्युक्तं भवति तदनुदात्तमुच्यते, अप्रधानमित्यर्थः। उदाहरणैरेवानयोर्विभागं दर्शयति,—"अस्या ऊ षु ण उप सातये भुवोऽहेलमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व। ओषु त्वा ववृतीमहि स्तोमभिर्दस्म साधुभिः न हि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे॥"—इति (ऋ० सं० २, २, २, ४)। परुच्छेपस्यार्षम्। अतिच्छन्दाः। 'ऊ'—इति, 'षु'—इति, 'ण'—इति पदानि। 'अस्याः' "अस्यै" 'सातये' लब्धये। कथं नाम वयमर्थमभिप्रेतं लभेमहि? इत्येतमर्थमुद्दिश्य, हे 'पूषन्!' अस्माकं सुष्ठु 'उप' समीपे 'भुवः' भव। त्वयि सन्निकृष्टे त्वदनुग्रहादेतमर्थं लभेमहीत्यभिप्रायः। कथं पुनरुपभव? 'अहेलमानः' अक्रुध्यन्, सर्वो ह्यभ्यर्थ्यमानः क्रुध्यतीत्यभिप्रायः। 'ररिवान्' दानवान्, दानाभिप्रायसंयुक्तेन चेतसा उपभव। 'अजाश्व' "अजनाश्व" गमनाश्व, छागाश्व वा 'श्रवस्यताम्' अस्माकं धनमिच्छतां भव, "अजनाश्व" छागाश्वेत्यर्थः। किञ्च,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'ओषु त्वा ववृतीमहि'। 'आ' 'उ' 'षु'—इति पदानि। 'आ ववृतीमहि' त्वां सुष्ठु आभिमुख्येन आत्मनो वर्त्तयामहे। केन? 'स्तोमेभिः' स्तोत्रैः। 'स्तोत्रैः'। 'दस्म' हे दस्म! दर्शनीय! अथवा दान्त! साधुभिः शोभनैरित्यर्थः। किञ्च, 'न हि त्वा' नैव त्वां दर्शनीयम् अतीत्य साधुतरां कञ्चिदप्यन्यामहं देवतां मन्ये, हे 'आघृणे' आगतदीप्ते! त्वद्भक्त एवाहमस्मीत्यभिप्रायः। किञ्च, 'न ते' न चाहं तव 'सख्यं' सखिभावं कदाचिदपि 'अपह्नवे' कृतज्ञो ह्यहमित्यभिप्रायः। एवमत्र सातिः प्रधानेति कृत्वा "अस्याः"—इत्येतत् पदमन्तोदात्तम्। अन्तोदात्तमपि च सदुदात्तमित्युक्तं भाष्यकारेण, एकदेशस्योदात्तत्वात्॥

"अथ" पुनर्यस्मिन् "अनुदात्तम्" एतत् पदं गुणभूतार्थाभिधायि भवति। तस्यैष निगमः,—"पुनः पत्नीमग्निरदादायुषा सह वर्चसा। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्॥"—इति (ऋ० सं० ८, ३, २७, ४)। सूर्य्याया आर्षम्। विवाहे विनियुक्ता। पित्रा पूर्वमेतां दत्तां सतीं कन्यां पत्नीं पुनरग्निरदात्, 'आयुषा सह वर्चसा' तेन सह एतस्मिन् वैवाहिके कर्मणि अग्निसन्निधिसंस्काराद् भार्य्यात्वमुपजायते इत्येतदपेक्ष्य पूर्वदानात् पुनर्दातृत्वमुच्यते। तदेवमस्या दत्ताया एतदाशास्महे,—'योऽस्याः पतिः' सः 'दीर्घायुः' अस्त्विति। यतो विशेषयन् ब्रवीमि,—"जीवतु सः शरदः शतम्"—इति। शरदि दुर्जीवाः, रोगभूयस्त्वात्, अतएव आशास्यते शरच्छतं जीवत्विति॥ एतस्मिन् मन्त्रे भर्त्तृकन्यासंयोगे सति भर्त्तैव प्रधानम्, तस्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ह्यायुराशास्यते। तस्य लक्षणार्था पत्नी। तस्मात् "दीर्घायुः अस्या यः पतिः"—इति, एतदनुदात्तम् ॥

निगमप्रसक्तमुच्यते,—"शरत्" "अस्यां" हि "श्रृताः" पक्वाः "ओषधयो भवन्ति"—इति, "शीर्णा आप इति वा" वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्य्यन्ते। "अस्य—इति" एतत् पदं पुंविषयम् षष्ठ्यन्तं "अस्याः—इत्येतेन" स्त्रीविषयेण पदेनैव व्याख्यातम्" ॥ ४ (२५) ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मयइति वदन्ति ॥ ५ (२६) ॥

यदेवोक्तम् "उदात्तं प्रथमादेशे, अनुदात्तम् अन्वादेशे"—इति तदेवात्रापि लक्ष्मित्यभिप्रायः। उदाहरणमात्रं प्रदर्श्यते,—"अस्य वामस्य ०—० सप्तपुत्रम्"। अस्यवामीयमेवेदं सूक्तम्। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शंस्त्रे शस्यते। 'अस्य' सूर्य्यस्य 'वामस्य' "वननीयस्य" स्तुतिभिः, 'पलितस्य' "पाल-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यितुः" अयं हि सर्वमेवेदं जगत् पालयति। 'होतुः' "ह्वातव्यस्य" आह्वानार्हस्य। आह, तस्य किम्? इति। उच्यते,—योऽयमेवं लक्षणः आह,—तस्य' भ्राता' "भागहर्त्ता" "भर्त्तव्यो वा" उदकेन, 'मध्यमः' मध्यमस्थानः 'अस्ति' विद्यते। कतमः? योऽयम् 'अश्नः' "अशनः" व्यापनो वायुरित्यर्थः, स हि द्युलोकादादित्येनोदकेन भ्रियते, हरति चोदकं द्युलोकात्। 'तृतीयः' 'अस्य' वायोः 'भ्राता' हविर्भागहर्त्ता वा, ऐन्द्राग्ने हविषि संस्तुतौ वा, घृतपृष्ठः' घृतेन स्पृष्टः, आज्यस्पृष्टः, "अयम्" एव "अग्निः" पृथिवीस्थानः। 'सहस्रिणः' वायोः, सर्वस्माद्धि वायुः वलवान्। अथवा सहस्रमस्य नियुक्तमश्वानामस्तीति सहस्री वायुः, "आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिः"—इति (ऋ० सं० २, १, २४, ३)। श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः, अग्निः,—इत्येवं परिसंख्याय वायोस्तृतीयोऽअग्निर्भवति, वायुरपि च ज्योतिरेव, "वायुना ज्योतिषा"—इति विज्ञायते। तत्रैतस्मिन् त्रेधा विभक्ते ज्योतिषि, प्रधानत्वेनैतमेवाहमपश्यमिति। 'विश्पतिं' विश्वस्य सर्वस्य जगतः पालयितारम्। कतमम्? य एषः 'सप्तपुत्रः' सूर्यएतमेवाहमत्र प्रधानेनापश्यमित्येवमेतस्मिन् मन्त्रे। सूर्यः प्रधानः, सूक्ते सूर्याधिकारात्, तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"—शब्द अन्तोदात्तः। वायुरत्राप्रधानम्, तस्मात् 'तृतीयो भ्राता घृतपृष्ठः अस्य,—इत्येषः "अस्य" —शब्दोऽनुदात्तः॥ एवमेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ "अस्य"-शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

आह,—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य" शब्देन सूर्य्य एव कस्मान्न सम्बध्यते ? अपि च "तृतीय"-शब्दस्य प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा योजना भविष्यति। उच्यते, —'अस्य वामस्य'—इत्येतदन्तोदात्तं पदमितरदन्यत् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इति प्रधानरूपमेव सत् पूर्वेणानुदात्तमिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्यमित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्ते वायुश्चात्राप्रधानः, प्रकृतादादित्यात् तस्माद्वायुविषयमेवेदम् अस्येति द्वितीयपदमनुदात्तं सम्पद्यते। अतः सुतरामुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे"—इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते,—प्रथमादेशो नाम प्रारम्भः, तत्र यद्वर्त्तते, तदुदात्तं भवति, प्रधानार्थतरमुदात्तत्वेनैव लक्षणेन। तद्यथा,—"अस्या ऊ षु णः (ऋ० सं० २, २, २, ४)" "अस्य वामस्य (ऋ० सं० २, ३, १४, १)"—इति। अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेशः, तत्र वर्त्तमानमनुदात्तं भवति। पदात् पदस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रुवते। तच्चानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरमप्रधानार्थतरं भवति। तद्यथा,—"दीर्घायुरस्या यः पतिः (ऋ० सं० ८, ३, २७, ४)" तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १)"—इति॥

आह,—कथं सप्तमपुत्र आदित्यः ? इति। उच्यते,—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येवमैतिहासिका मन्यन्ते। ब्राह्मणेऽपि च,—"मृतपितरमण्डमवापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति ह विज्ञायते"। अथवा सप्तसंख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः। अथवा नैव संख्याभिप्रायमेतत् सप्तपुत्र इति। आह,—कथं तर्हि ? इति। उच्यते,—"सर्पणपुत्रमिति" एवम्, सर्पणा हि तस्य रश्मयो मुहूर्त्तमप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः। "सप्त सृप्ता संख्या" षड्भ्यः सकाशात्। एवं सप्तसंख्योपेताः, सर्पणक्रियायोग्या वा एत एव "आदित्यरश्मयः" आदित्यस्य पुत्राः "इति" मन्त्रविदः "वदन्ति" मन्यन्ते ॥५(२६)॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणंचक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसन्नामात् संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सरः संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वाजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति पञ्चारे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

चक्रे परिवर्त्तमान इति पञ्चर्तुतया पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयोः समासेन षलर आहुरर्पितमिति षड्तुतया अराः प्रत्यृता नाभौ षट् पुनः सहृतेः। द्वादशारं नहि तज्जराय। द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात् प्रधिः प्रहितो भवति। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन॥६॥

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४, ४ ॥

यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपरा ऋगेतस्मिन्नेव सूक्ते "सप्त युञ्जन्ति ०—० अधि तस्थुः"—इति (ऋ० सं० २, ३, १४, २)। 'सप्त' सङ्ख्योपेताः सर्पणा वा 'युञ्जन्ति' योजयन्त्यात्मना रश्मयः 'रथं' रंहणमादित्यम्, उद्यन्नेव ह्यसावादित्यो रश्मिभिः युज्यते, रंहणश्चासौ मुहूर्त्तमप्यनवस्थायित्वात्। 'एकचक्रम्' एक एव ह्यसावन्तरिक्षे चरति, इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। 'एकोऽश्वः', एक एवाश्वः, अशनो व्यापनः सर्वभूतानाम् 'वहति' गच्छति 'सप्तनामा' सप्तस्तुतिः, सप्तपुत्रः—इत्येवमाद्याः सप्त-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सङ्ख्याकाः स्तुतयोऽस्य। अथवा "सप्तास्मै रश्मयो रसानभिसन्नामयन्ति"—एतस्मिन् मण्डले, इति सप्तनामा। अथवा "सप्तैनमृषयः (नमन्ति) स्तुवन्ति इति" सप्तनामा। "इदमपीतरत्" शब्दः "नाम" "एतस्मादेव"—"अभिसन्नामात्" तदपि स्वमर्थं प्रत्याययितुं क्रियापदस्य वा गुणभावेनाभिमुख्येन सन्नमति। स एवंलक्षणः सप्तचारी व्यापनः सप्तनामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादारभ्य यावदस्तमिति, तदैवं वहन् निर्वर्त्तयन्तीति उच्यते,—'त्रिनाभिचक्रमजरमनर्वम्' 'त्रिनाभिसंयुक्तं कालचक्रम्, चक्रनधर्मि, चक्रनं चलनमुच्यते; चरणधर्मि, क्रमणधर्मि वा। 'अजरम्' "अजरणधर्माणम्"। 'अनर्वम्' "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः। 'त्रिनाभिचक्रं' "ऋतुः" हि "संवत्सरः"—"ग्रीष्मो वर्षा हेमन्त इति" अनेन ऋतुविभागेन एतदेवास्य त्रिनाभित्वमभिप्रेतम्। ऋतुभिर्हि संवत्सरो नह्यते सन्नह्यते इत्यर्थः। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः" नादित्यप्रधानः। "संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्, समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुनाभिप्रायो वा स्यात् संवासः? "ग्रीष्मः, ग्रस्यन्तेऽस्मिन् रसाः" सूर्य्येण। "वर्षा, वर्षत्यासु पर्जन्यः" तदेतत् प्रत्यक्षमेव। "हेमन्तः, हिमवान्" तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हन्त्योषधिवनस्पतीन् प्रकिरति, "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः, गमनार्थस्य वा हन्तेः, तद्धि गमयति क्षयं भूतानि। 'अजरं' तत् संवत्सरचक्रम् अजरणधर्मि, न हि संव-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वं" च तत् "अप्रत्यृतम्" अप्रतिगतमनाश्रितमन्यत्र क्वचित्। आह, अत्र किम्? इति। उच्यते,—"यत्र" यस्मिन् 'मा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभिसन्तिष्ठन्ते" आश्रितानि विनाशमुपयान्ति। विनाशोऽपि हि संस्थोच्यते, संस्थितः पिता ममेत्युक्ते मृत इति गम्यते। तदेवंलक्षणं 'त्रिनाभि' कालचक्रमजरम्, य आदित्योऽभिनिर्वर्त्तयति, यच्चेदमभिनिर्वर्त्यते कालचक्रम्, तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्द्धर्च आदित्यप्रधानः, उत्तरः संवत्सरप्रधानः॥

आह—कथं गम्यते सम्वत्सरप्रधान उत्तरोऽर्द्धर्चः इति, नहि संवत्सरग्रहणमत्रास्ति? उच्यते,—'त्रिनाभिचक्रम्'—इत्येतस्मादनुसम्बन्धात्। आह,—एतदपि विशेषलिङ्गमत्र नास्त्येव, त्रय ऋतवो नाभिशब्देनोच्यन्ते इति? तस्मादेतदप्ययुक्तमेवेति। उच्यते,—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्य्येणाभिनिर्वर्त्त्यते संवत्सरः, अस्मिंश्च सर्वाण्येतानि भूतान्यभिसन्तिष्ठन्ते, "तम्" एतं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रकृत् 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वैः अवयवैः 'पञ्चारे चक्रे' 'षडरे' 'त्रीणि शतानि षष्टिश्च' 'सप्तशतानि विंशतिश्च'—इत्येवम्प्रकारैः "स्तौति"। तस्मात् सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते। षण्णामृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्। अथैव-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मुक्त्वा "तं संवत्सरं सर्वमात्राभिः स्तौति" अधुना यथैतं सर्वमात्राभिः स्तौति, तथोपपादयति,—"पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्य्यते स नाभिः॥"—इति (ऋ० सं० २, ३, १६, ३—१, २२, ८, १३)। "इति पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः। 'परिवर्त्तमाने' परिगृह्येदं जगद्वर्त्तमाने। आह,—किम्? इति। उच्यते, 'तस्मिन्नातस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढानि। कानि? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि; कालचक्रे हि सर्वमेवेदं जगदधिरूढं बम्भ्रमीति। अथैवमतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य 'भूरिभारः' बहुभारः सन्नेवायम् 'अक्षः' संवत्सराख्यः 'न तप्यते' न सन्तापयति नापि सन्तापं यास्यतीत्यर्थः। अपि च 'सनादेव' चिरन्तन एव सोऽक्षः, तथापि न तप्यते, न वा तप्तोऽपि सन् सहसैव 'विशीर्य्यते' नश्यति। आह,—यद्यक्षो न तप्यते शीर्य्यते वा, किमेवमतिवलीयसाक्षेण घृष्यमाणा नाभिः, तप्यते शीर्य्यते वा? इति। नेत्युच्यते,—'स नाभिः' अक्षो न शीर्य्यते न तप्यते। नाभिसादित्य एवाभिप्रेतः। आह,—कथमेतद्गम्यते 'पञ्चारे चक्रे'—इत्यत्र अर-शब्देन ऋतवोऽभिप्रेता इति, न ह्यत्र विशेषलिङ्गमृतूनामरत्वेऽस्ति, अपि च ऋतवः षट् प्रसिद्धाः, इह च पञ्चार इति श्रूयते, तस्मादनुपपन्नम्? इति। उच्यते,—सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते। "पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणम्,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हेमन्तशिशिरयोः समासेन" एकत्वेनेत्यर्थः। तस्मादुपपद्यते। एवं पञ्चर्त्तुत्वमृतूनाम्, अरत्वं चावयवस्तुत्यभिसम्बन्धादिति॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्"—इति (ऋ० सं० २, ३, १६, १)। "षळर आहुरर्पितमिति षडृतुतया" संवत्सरस्य स्तुतिः। 'पञ्चपादं संवत्सरम्, ऋतवो हि संवत्सरस्य पादाः, तैरयसौ पतति गच्छति। 'पितरं' पालकं सर्वभूतानामुत्पादयितारं वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहम्, "द्वादशमासाः संवत्सरस्य"—इति च ब्राह्मणम् "दिवे' द्युलोकस्य 'परे' परमे 'अर्द्धे' स्थाने योऽयमवस्थित आदित्यः, एतस्मिन् पञ्चपादं पितरं द्वादशाकृतिं 'पुरीषिणं' उदकवन्तं संवत्सरम् 'अर्पितमाहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वऋतवो वृष्टिमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्वमुपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' य एते 'उपरे' उपर्य्यवस्थिताः, 'सप्त' ऋषयः, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टारमेवमादित्यं 'चक्रे षडरे' तस्मिन् संवत्सराख्ये 'अर्पितमाहुः'। अथवा सप्तचक्र आदित्यः, स हि सप्तभीरश्मिभिश्चकते दीप्यते, 'सप्तचक्रे'—इत्येकं पदं तस्मादेवमपि भवति॥ एवमेके संवत्सरमादित्यप्रविष्टमाहुः,अपरे पुनरादित्यं संवत्सरेप्रविष्टमित्येष समस्तार्थः॥ एवमेतस्यामृचि आदित्यसंवत्सरौ स्तूयेते। वक्ष्यति हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"। संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुतिरुपपद्यते॥ "अराः प्रत्यृता नाभौ"

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतिगता इत्यर्थः। "षट् पुनः सहतेः" ते हि पञ्चसङ्ख्यामभिभूय वर्त्तन्ते॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्रमेकम्"—इति। "इति मासानाम्" एतौ पादौ भवत इति वाक्यशेषः। "द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिन चलाचलासः॥"—इति (ऋ० सं० २, ३, २३, २)। "मासा मानात्" मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रश्लिष्य चक्रे निहितः "भवति" गण्डपुच्छः प्रधिरित्युच्यते। 'द्वादशप्रधयः' मासाख्याः, संहताः सन्तः 'चक्रमेकं' भवति। तत्र च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति। यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथार्थ्यतो विजानाति? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिशता न शङ्कवोऽर्पिताः' त्रिशतान्यहोरात्राणि शङ्कव इवार्पितानि। 'षष्टिर्न' षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षिप्तानि। द्वितीयो नकारः समुच्चयार्थे। 'चलाचलासः' चलानि च अचलानि च, चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभावं न मुञ्चति। आह,—कथं गम्यते अहोरात्राण्येतानीति? उच्यते,—संवत्सरस्तुतिप्रायसम्बन्धाच्च। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः इति च ब्राह्मणं समासेन" अहोरात्रयोरेकत्वेनेत्यर्थः॥

"द्वादशारं न हि तज्जराय वर्वर्त्ति चक्रं परि द्यामृतस्य। आ



CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥"—इति ( ऋ० सं० २, ३, १६, १ )। 'न हि तज्जीर्य्यते' किं तर्हि अन्यानि भूतानि जरयत् 'वर्वर्त्ति च पुनः पुनर्वर्त्तते। 'परि द्यां' परिगृह्य द्याञ्च पृथिवीञ्च ततो वर्वर्त्ति। 'ऋतस्य' उदकस्य पूर्णम्, अथवा 'ऋतस्य' आदित्यस्य स्वभूतम्, अथवा 'ऋतस्य' यज्ञस्याङ्गभूतम् 'आतस्थुः' पुत्राः। एतस्मिंश्चक्रे 'मिथुना' द्वन्द्वा इत्यर्थः। कस्य ? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणंस्यते, अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेतः, तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते, तत्कृतत्वादहोरात्राणाम्। आह,—कियन्तस्ते पुत्राः ? इति। उच्यते,—"सप्तशतानि विंशतिश्च"। ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः—इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन"—इति ॥ एवमेतस्मिन् सूक्ते संवत्सरं "सर्वमात्राभिः" सर्वैरवयवैः "स्तौति"। तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्यामृचि संवत्सरप्रधान स्त्रिनाभिचक्रमित्येषोऽर्द्धर्चः। तदेतत् सर्वमपि 'सप्तपुत्रं' सर्पणपुत्रमित्येतस्मात् पदात् प्रसक्तानुप्रसक्तमुक्तम्, प्रकृतमिदानीं वर्णयिष्यामः। किं पुनः प्रकृतम् ? ऐकपदिकं समाम्नायव्याख्यानम्। तत्र यदुक्तं तदुक्तमेव, यदनुक्तं तद्वक्तव्यमितीदमारभ्यते,—"सस्निमविन्दच्चरणे नदीनाम्"—इति ॥ ६ (२७)॥

इति निरुक्तवृत्तौ नवमाध्यायस्य [ चतुर्थाध्यायस्य ]
चतुर्थः पादः ॥ ४, ४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ नवमोऽध्यायः (चतुर्थोऽध्यायः) समाप्तः ॥ ४ ॥

———

१ २ ३ ४ ५ ६
(एकार्थकोऽनुवयःसुपर्णायदिन्द्रजुष्टोदसूनाः सम्मातप-
७ ८ ९ १० ११ १२ १३
न्तीषिरेणमरुत्वाँ तितउसक्तुमिवततस्सूर्यस्येन्द्रेणसमीर्मान्ता-
१४ १५ १६ १७ १८ १९ २०
सः कायमानःकनीनकेवापोअदर्शिसुवितेविद्यामदेवानआघा-
२१ २२ २३ २४ २५ २६ २७
द्यौर्मेऽदितिरदितिरुतस्मान्नाहास्यवामस्यसप्तयुञ्जन्ति सप्त-
विंशतिः ॥)

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अथ पञ्चमाध्यायस्य

### प्रथमः पादः ।

—:o*o:—

ॐ३म् । सस्निमविन्दच्चरणे नदीनाम् । संस्नातं मेघम् । वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । वोढृतमो ह्वानानां स्तोमोदूतो हुवन्नरौ मनुष्या नरा नृत्यन्ति कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा (दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति ।) वावशानो वष्टेर्वा वाश्यतेर्वा । सप्त स्वसृररुषीर्वावशान इत्यपि निगमो भवति । वार्यं वृणोतेरथापि वरतमम् । तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् । तद्वार्य्यं वृणामहे वर्षिष्ठं गोपायितव्यं गोपायितारः । यूयं स्थ युष्मभ्यमिति वान्धं इत्यन्ननामा-ध्यानीयं भवति । आमत्रेभिः सिञ्चता मद्यमन्धः । आसिञ्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनरनिर्मितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तम इत्यभिभाषन्तेऽयसपीतरोऽन्ध एतस्मादेव । पश्यदक्षण्वान् न विचेतदन्ध इत्यपि निगमो भवति ॥ १ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"सस्निम् (१)"—इति। एतदनवगम्। अर्थाप्रतीतिरस्य-नवगम्य इत्युच्यते। लक्षणासम्पन्नश्च संस्कारः खल्वपि अविज्ञा-तमित्युच्यते। तत्रैवं सति, कचित्प्रकृत्यादेः संस्कारस्यानवगमः, क्वचिदर्थाप्रतीतिरेव, क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव सस्नि-मिति न विज्ञायते किमप्युक्तं भवति ? प्रकरणादत्र मेधाभिधेयम्, अन्यत्रान्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रै-वोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते। "सस्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परिजानादहीनाम्॥"—इति (ऋ० सं० ८, ७, २७, ६)। विश्वावसोर्देवगन्धर्वस्येयमार्षम्। घर्मोत्सादने विनियुक्ता। तत्रोक्तं परिषिक्ते गन्धर्वनामभिरुपति-ष्ठन्तऋत्विजो यजमानश्चेति। तासामुपस्थानर्चामियं मध्ये मैत्राय-णीयके। 'सस्निं' "संस्नातम्" अद्भिः परिवेष्टितं, सर्वतः परिस्नुतं, धौतं वा "मेघम्" 'अविन्दत्' अलभतेन्द्रः। क्व पुनरलभत ? 'चरणे नदीनां' यत्र नदना आपश्चरन्ति, गच्छन्ति, तत्रालभत, अन्तरिक्षलोके इत्यर्थः। आह,—लब्ध्वानन्तरं किमकरोत् ? इति। उच्यते,—'अपावृणोत्' अपावृतवान्, उद्घाटितवानि-त्यर्थः। 'दुरः' द्वारः। आह,—कस्य ? उच्यते,—'अश्मव्रजा-नाम्' अपामश्मा मेघः, तमधि या व्रजति, स च यासां व्रजभूतो गोष्ठभूतः, ता अश्मव्रजा आपः, तासां निर्गमनद्वाराणि अपावृ-णोत्। या एता एवंलक्षणा आप', 'आसाम्' अस्य च इन्द्रस्य 'गन्धर्वः' विश्वावसुः 'प्रावोचत्'—'अमृतानि' नामानि, छान्दसस्तु-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ह्यायुराशास्यते। तस्य लक्षणार्था पत्नी। तस्मात् "दीर्घायुः अस्या यः पतिः"—इति, एतदनुदात्तम् ॥

निगमप्रसक्तमुच्यते,—"शरत्" "अस्यां" हि "श्रृताः" पक्वाः "ओषधयो भवन्ति"—इति, "शीर्णा आप इति वा" वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्य्यन्ते। "अस्य-इति" एतत् पदं पुंविषयम् षष्ठ्यन्तं "अस्याः—इत्येतेन" स्त्रीविषयेण पदेनैव व्याख्यातम्" ॥ ४ (२५) ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सर्पणपुत्रमिति वा सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मयइति वदन्ति ॥ ५ (२६) ॥

यदेवोक्तम् "उदात्तं प्रथमादेशे, अनुदात्तम् अन्वादेशे"—इति तदेवात्रापि लक्ष्ममित्यभिप्रायः। उदाहरणमात्रं प्रदर्श्यते,—"अस्य वामस्य ०—० सप्तपुत्रम्"। अस्यवामीयमेवेदं सूक्तम्। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शंस्त्रे शस्यते। 'अस्य' सूर्य्यस्य 'वामस्य' "वननीयस्य" स्तुतिभिः, 'पलितस्य' "पाल-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यितुः" अयं हि सर्वमेवेदं जगत् पालयति। 'होतुः' "ह्वातव्यस्य" आह्वानार्हस्य। आह, तस्य किम्? इति। उच्यते,—योऽयमेवं लक्षणः आह,—तस्य' भ्राता' "भागहर्त्ता" "भर्त्तव्यो वा" उदकेन, 'मध्यमः' मध्यमस्थानः 'अस्ति' विद्यते। कतमः? योऽयम् 'अश्नः' "अशनः" व्यापनो वायुरित्यर्थः, स हि द्युलोकादादित्येनोदकेन भ्रियते, हरति चोदकं द्युलोकात्। 'तृतीयः' 'अस्य' वायोः 'भ्राता' हविर्भागहर्त्ता वा, ऐन्द्राग्ने हविषि संस्तुतौ वा, घृतपृष्ठः' घृतेन स्पृष्टः, आज्यस्पृष्टः, "अयम्" एव "अग्निः" पृथिवीस्थानः। 'सहस्रिणः' वायोः, सर्वस्माद्धि वायुः बलवान्। अथवा सहस्रमस्य नियुक्तमश्वानामस्तीति सहस्री वायुः, "आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिः"—इति (ऋ० सं० २, १, २४, ३)। श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः, अग्निः,—इत्येवं परिसंख्याय वायोस्तृतीयोऽग्निर्भवति, वायुरपि च ज्योतिरेव, "वायुना ज्योतिषा"—इति विज्ञायते। तत्रैतस्मिन् त्रेधा विभक्ते ज्योतिषि, प्रधानत्वेनैतमेवाहमपश्यमिति। 'विश्पतिं' विश्वस्य सर्वस्य जगतः पालयितारम्। कतमम्? य एषः 'सप्तपुत्रः' सूर्यएतमेवाहमत्र प्रधानेनापश्यमित्येवमेतस्मिन् मन्त्रे। सूर्य्यः प्रधानः, सूक्ते सूर्य्याधिकारात्, तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"—शब्द अन्तोदात्तः। वायुरत्राप्रधानम्, तस्मात् 'तृतीयो भ्राता घृतपृष्ठः अस्य,—इत्येषः "अस्य" —शब्दोऽनुदात्तः॥ एवमेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ "अस्य"-शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम्॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आह,—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य" शब्देन सूर्य्य एव कस्मान्न सम्बध्यते ? अपि च "तृतीय"-शब्दस्य प्रकृतानुक्रमाविरोधेनैवमेव सुखतरा योजना भविष्यति। उच्यते,—'अस्य वामस्य'—इत्येतदन्तोदात्तं पदमितरदन्यत् 'तृतीयो भ्राता घृतपृष्ठः अस्य'—इति प्रधानरूपमेव सत् पूर्वेणानुदात्तमिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्यमित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्ते वायुश्चात्राप्रधानः, प्रकृतादादित्यात् तस्माद्वायुविषयमेवेदम् अस्येति द्वितीयपदमनुदात्तं सम्पद्यते। अतः सुतरामुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे"—इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते,—प्रथमादेशो नाम प्रारम्भः, तत्र यद्वर्त्तते, तदुदात्तं भवति, प्रधानार्थतरमुदात्तत्वेनैव लक्षणेन। तद्यथा,—"अस्या ऊ षु णः (ऋ० सं० २, २, २, ४)" "अस्य वामस्य (ऋ० सं० २, ३, १४, १)"—इति। अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेशः, तत्र वर्त्तमानमनुदात्तं भवति। पदात् पदस्य निघातो भवतीति हि लक्षणविदोऽपि ब्रुवते। तच्चानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतरमप्रधानार्थतरं भवति। तद्यथा,—"दीर्घायुरस्या यः पतिः (ऋ० सं० ८, ३, २७, ४)" तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १)"—इति॥

आह,—कथं सप्तमपुत्र आदित्यः ? इति। उच्यते,—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येवमैतिहासिका मन्यन्ते। ब्राह्मणेऽपि च,—"मृतपितरमण्डमवापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति ह विज्ञायते" । अथवा सप्तसंख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः । अथवा नैव संख्याभिप्रायमेतत् सप्तपुत्र इति । आह,—कथं तर्हि ? इति । उच्यते,—"सर्पणपुत्रमिति" एवम्, सर्पणा हि तस्य रश्मयो मुहूर्त्तमप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः । "सप्त सृप्ता संख्या" षड्भ्यः सकाशात् । एवं सप्तसंख्योपेताः, सर्पणक्रियायोग्या वा एत एव "आदित्यरश्मयः" आदित्यस्य पुत्राः "इति" मन्त्रविदः "वदन्ति" मन्यन्ते ॥५(२६)॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणंचक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वेदमपीतरन्नामैतस्मादेवाभिसन्नामात् संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सरः संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा हिनोतेर्वाजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति पञ्चारे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चक्रे परिवर्त्तमान इति पञ्चर्तुतया पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयोः समासेन षळर आहुरर्पितमिति षड्तुतया अराः प्रत्यृता नाभौ षट् पुनः सहतेः। द्वादशारं नहि तज्जराय। द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानात् प्रधिः प्रहितो भवति। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन विभागेन॥६॥

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४, ४ ॥

यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेयमपरा ऋगेतस्मिन्नेव सूक्ते "सप्त युञ्जन्ति ०—० अधि तस्थुः"—इति (ऋ० सं० २, ३, १४, २)। 'सप्त' सङ्ख्योपेताः सर्पणा वा 'युञ्जन्ति' योजयन्त्यात्मना रश्मयः 'रथं' रंहणमादित्यम्, उद्यन्नेव ह्यसावादित्यो रश्मिभिः युज्यते, रंहणश्चासौ मुहूर्त्तमप्यनवस्थायित्वात्। 'एकचक्रम्' एक एव ह्यसावन्तरिक्षे चरति, इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। 'एकोऽश्वः', एक एवाश्वः, अशनो व्यापनः सर्वभूतानाम् 'वहति' गच्छति 'सप्तनामा' सप्तस्तुतिः, सप्तपुत्रः—इत्येवमाद्याः सप्त-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सङ्ख्याकाः स्तुतयोऽस्य। अथवा "सप्तास्मै रश्मयो रसानभिसन्नामयन्ति"—एतस्मिन् मण्डले, इति सप्तनामा। अथवा "सप्त नमृषयः (नमन्ति) स्तुवन्ति इति" सप्तनामा। "इदमपीतरत्" शब्दः "नाम" "एतस्मादेव"—"अभिसन्नामात्" तदपि स्वमर्थं प्रत्याययितुं क्रियापदस्य वा गुणभावेनाभिमुख्येन सन्नमति। स एवंलक्षणः सप्तचारी व्यापनः सप्तनामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादारभ्य यावदस्तमिति, तदैवं वहन् निर्वर्त्तयन्तीति उच्यते,—'त्रिनाभिचक्रमजरमनर्वम्' 'त्रिनाभिसंयुक्तं कालचक्रम्, चकनधर्मि, चकनं चलनमुच्यते, चरणधर्मि, क्रमणधर्मि वा। 'अजरम्' "अजरणधर्माणम्"। 'अनर्वम्' "अप्रत्यृतमन्यस्मिन्" अनाश्रितमित्यर्थः। 'त्रिनाभिचक्रं' "ऋतुः" हि "संवत्सरः"—"ग्रीष्मो वर्षा हेमन्त इति" अनेन ऋतुविभागेन एतदेवास्य त्रिनाभित्वमभिप्रेतम्। ऋतुभिर्हि संवत्सरो नह्यते सन्नह्यते इत्यर्थः। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः" नादित्यप्रधानः। "संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्, समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुनाभिप्रायो वा स्यात् संवासः? "ग्रीष्मः, ग्रस्यन्तेऽस्मिन् रसाः" सूर्य्येण। "वर्षा, वर्षत्यासु पर्जन्यः" तदेतत् प्रत्यक्षमेव। "हेमन्तः, हिमवान्" तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हन्त्योषधिवनस्पतीन् प्रकिरति, "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः, गमनार्थस्य वा हन्तेः, तद्धि गमयति क्षयं भूतानि। 'अजरं' तत् संवत्सरचक्रम् अजरणधर्मि, न हि संव-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वं" च तत् "अप्रत्यृतम्" अप्रतिगतमनाश्रितमन्यत्र क्वचित्। आह, अत्र किम्? इति। उच्यते,—"यत्र" यस्मिन् 'मा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभिसन्तिष्ठन्ते" आश्रितानि विनाशमुपयान्ति। विनाशोऽपि हि संस्थोच्यते, संस्थितः पिता ममेत्युक्ते मृत इति गम्यते। तदेवंलक्षणं 'त्रिनाभि' कालचक्रमजरम्, य आदित्योऽभि-निर्वर्त्तयति, यच्चेदमभिनिर्वर्त्त्यते कालचक्रम्, तदेतदुभयमप्यहं स्तौमीत्येवमस्य मन्त्रस्य पूर्वोऽर्द्धर्चं आदित्यप्रधानः, उत्तरः संवत्सरप्रधानः॥

आह—कथं गम्यते सम्वत्सरप्रधान उत्तरोऽर्द्धर्चः इति, नहि संवत्सरग्रहणमत्रास्ति? उच्यते,—'त्रिनाभिचक्रम्'—इत्येतस्मा-दनुसम्बन्धात्। आह,—एतदपि विशेषलिङ्गमत्र नास्त्येव, त्रय ऋतवो नाभिशब्देनोच्यन्ते इति? तस्मादेतदप्ययुक्तमेवेति। उच्यते,—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्य्येणाभिनिर्वर्त्त्यते संवत्सरः, अस्मिंश्च सर्वाण्येतानि भूतान्यभिसन्तिष्ठन्ते, "तम्" एतं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रकृत् 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वैः अवयवैः 'पञ्चारे चक्रे' 'षडरे' 'त्रीणि शतानि षष्टिश्च' 'सप्तशतानि विंशतिश्च'—इत्येव-म्प्रकारैः "स्तौति"। तस्मात् सूक्ते संवत्सरस्यावयवस्तुतिप्राय-दर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते। षण्णामृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम्। अथैव-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुक्त्वा "तं संवत्सरं सर्वमात्राभिः स्तौति" अधुना यथैतं सर्वमात्राभिः स्तौति, तथोपपादयति,—"पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्य्यते स नाभिः॥"—इति (ऋ० सं० २, ३, १६, ३—१, २२, ८, १३)। "इति पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः। 'परिवर्त्तमाने' परिगृह्येदं जगद् वर्त्तमाने। आह,—किम्? इति। उच्यते, 'तस्मिन्नातस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढानि। कानि? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि, कालचक्रे हि सर्वमेवेदं जगदधिरूढं बम्भ्रमीति। अथैवमतिमहतापि सर्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य 'भूरिभारः' बहुभारः सन्नेवायम् 'अक्षः' संवत्सराख्यः 'न तप्यते' न सन्तापयति नापि सन्तापं यास्यतीत्यर्थः। अपि च 'सनादेव' चिरन्तन एव सोऽक्षः, तथापि न तप्यते, न वा तप्तोऽपि सन् सहसैव 'विशीर्य्यते' नश्यति। आह,—यद्यक्षो न तप्यते शीर्य्यते वा, किमेवमतिवलीयसाक्षेण घृष्यमाणा नाभिः, तप्यते शीर्य्यते वा? इति। नेत्युच्यते,—'स नाभिः' अक्षो न शीर्य्यते न तप्यते। नाभिसादित्य एवाभिप्रेतः। आह,—कथमेतद्गम्यते 'पञ्चारे चक्रे'—इत्यत्र अर-शब्देन ऋतवोऽभिप्रेता इति, न ह्यत्र विशेषलिङ्गमृतूनामरत्वेऽस्ति, अपि च ऋतवः षट् प्रसिद्धाः, इह च पञ्चार इति श्रूयते, तस्मादनुपपन्नम्? इति। उच्यते,—सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते। "पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणम्,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हेमन्तशिशिरयोः समासेन" एकत्वेनेत्यर्थः। तस्मादुपपद्यते। एवं पञ्चर्त्तुत्वमृतूनाम्, अरत्वं चावयवस्तुत्यभिसम्बन्धादिति॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्"—इति (ऋ० सं० २, ३, १६, १)। "षळर आहुरर्पितमिति षड्ऋतुतया" संवत्सरस्य स्तुतिः। 'पञ्चपादं संवत्सरम्, ऋतवो हि संवत्सरस्य पादाः, तैस्यसौ पतति गच्छति। 'पितरं' पालकं सर्वभूतानामुत्पादयितारं वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहम्, "द्वादशमासाः संवत्सरस्य"—इति च ब्राह्मणम् "दिवे' द्युलोकस्य 'परे' परमे 'अर्द्धे' स्थाने योऽयमवस्थित आदित्यः, एतस्मिन् पञ्चपादं पितरं द्वादशाकृतिं 'पुरीषिणं' उदकवन्तं संवत्सरम् 'अर्पितमाहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वऋतवो वृष्टिमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्वमुपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' य एते 'उपरे' उपर्य्यवस्थिताः, 'सप्त' ऋषयः, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टारमेवमादित्यं 'चक्रे षडरे' तस्मिन् संवत्सराख्ये 'अर्पितमाहुः'। अथवा सप्तचक्र आदित्यः, स हि सप्तभीरश्मिभिश्चकते दीप्यते, 'सप्तचक्रे'—इत्येकं पदं तस्मादेवमपि भवति॥ एवमेके संवत्सरमादित्यप्रविष्टमाहुः,अपरे पुनरादित्यं संवत्सरेप्रविष्टमित्येष समस्तार्थः॥ एवमेतस्यामृचि आदित्यसंवत्सरौ स्तूयेते। वक्ष्यति हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"। संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुतिरुपपद्यते॥ "अराः प्रत्यृता नाभौ"

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतिगता इत्यर्थः। "षट् पुनः सहतेः" ते हि पञ्चसङ्ख्यामभिभूय वर्त्तन्ते ॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्रमेकम्"—इति। "इति मासानाम्" एतौ पादौ भवत इति वाक्यशेषः। "द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥" —इति (ऋ० सं० २, ३, २३, २)। "मासा मानात्" मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रश्लिष्य चक्रे निहितः "भवति" गण्डपुच्छः प्रधिरित्युच्यते। 'द्वादशप्रधयः' मासाख्याः, संहताः सन्तः 'चक्रमेकं' भवति। तत्र च पुनः 'त्रीणि नभ्यानि' फलकानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति। यदेतदेवंलक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथार्थ्यतो विजानाति? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिशता न शङ्कवोऽर्पिताः' त्रिशतान्यहोरात्राणि शङ्कव इवार्पितानि। 'षष्टिर्न' षष्ट्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षिप्तानि। द्वितीयो नकारः समुच्चयार्थे। 'चलाचलासः' चलानि च अचलानि च, चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभावं न मुञ्चति। आह,—कथं गम्यते अहोरात्राण्येतानीति? उच्यते,—संवत्सरस्तुतिप्रायसम्बन्धाश्च। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः इति च ब्राह्मणं समासेन" अहोरात्रयोरैकत्वेनेत्यर्थः॥

"द्वादशारं न हि तज्जराय वर्वर्त्ति चक्रं परि द्यामृतस्य। आ


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥"— इति ( ऋ० सं० २, ३, १६, १ )। 'न हि तज्जीर्य्यते' किं तर्हि अन्यानि भूतानि जरयत् 'वर्वर्त्ति च पुनः पुनर्वर्त्तते। 'परि द्यां' परिगृह्य द्यांश्च पृथिवीञ्च ततो वर्वर्त्ति। 'ऋतस्य' उदकस्य पूर्णम्, अथवा 'ऋतस्य' आदित्यस्य स्वभूतम्, अथवा 'ऋतस्य' यज्ञस्यांङ्गभूतम् 'आतस्थुः' पुत्राः। एतस्मिंश्चक्रे 'मिथुना' द्वन्द्वा इत्यर्थः। कस्य ? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणंस्यते, अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेतः, तस्याहोरात्राण्येव पुत्रत्वेनोच्यन्ते, तत्कृतत्वादहोरात्राणाम्। आह,—कियन्तस्ते पुत्राः ? इति। उच्यते,—"सप्तशतानि विंशतिश्च"। ब्राह्मणमपि चैतस्मिन्नर्थे भवति,—"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः— इति च ब्राह्मणमहोरात्रयोर्विभागेन विभागेन"—इति ॥ एवमेतस्मिन् सूक्ते संवत्सरं "सर्वमात्राभिः" सर्वैरवयवैः "स्तौति"। तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्यामृचि संवत्सरप्रधान स्त्रिनाभिचक्रमित्येषोऽर्द्धर्चः। तदेतत् सर्वमपि 'सप्तपुत्रं' सर्पणपुत्रमित्येतस्मात् पदात् प्रसक्तानुप्रसक्तमुक्तम्, प्रकृतमिदानीं वर्णयिष्यामः। किं पुनः प्रकृतम् ? ऐकपदिकं समाम्नायव्याख्यानम्। तत्र यदुक्तं तदुक्तमेव, यदनुक्तं तद्वक्तव्यमितीदमारभ्यते,—"सस्निमविन्दच्चरणे नदीनाम्"—इति ॥ ६ (२७)॥

इति निरुक्तवृत्तौ नवमाध्यायस्य [ चतुर्थाध्यायस्य ]

चतुर्थः पादः ॥ ४, ४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन
आचार्यभगवद्दुर्गस्य कृतौ नवमोऽध्यायः
(चतुर्थोऽध्यायः) समाप्तः ॥ ४ ॥

---

१ २ ३ ४ ५ ६
(एकार्थकोऽनुवयःसुपर्णायदिन्द्रजुष्टोदमूनाः सम्मातप-
७ ८ ९ १० ११ १२ १३
न्तीषिरेणमरुत्वाँतितउसक्तुमिवततस्सूर्यस्येन्द्रेणसमीर्मान्ता-
१४ १५ १६ १७ १८ १९ २०
सः कायमानःकनीनकेवोपोअदर्शिसुवितेविद्यामदेवानआघा-
२१ २२ २३ २४ २५ २६ २७
द्यौर्मेऽदितिरदितिरुतस्मात्राहास्यवामस्यसप्तयुञ्जन्ति सप्त-
विंशतिः ॥)

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

# अथ पञ्चमाध्यायस्य

## प्रथमः पादः ।

—:०*०:—

ॐ३म् । सस्निमविन्दच्चरणे नदीनाम् । संस्नातं मेघम् । वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । वोढृतमो ह्वानानां स्तोमोदूतो हुवन्नरौ मनुष्या नरा नृत्यन्ति कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा (दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति ।) वावशानो वष्टेर्वा वाश्यतेर्वा । सप्त स्वसृररुषीर्वावशान इत्यपि निगमो भवति । वार्यं वृणोतेरथापि वरतमम् । तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् । तद्वार्य्यं वृणामहे वर्षिष्ठं गोपायितव्यं गोपायितारः । यूयं स्थ युष्मभ्यमिति वान्ध इत्यन्ननामाध्यानीयं भवति । आमत्रेभिः सिञ्चता मद्यमन्धः । आसिञ्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्त्यमा पुनरनिर्मितं भवति पात्रं पानात्तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तम इत्यभिभाषन्तेऽयमपीतरोऽन्ध एतस्मादेव । पश्यदक्षण्वान् न विचेतदन्ध इत्यपि निगमो भवति ॥ १ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"सन्निम् (१)"—इति। एतदनवगम्। अर्थाप्रतीतिरस्य-नवगम्य इत्युच्यते। लक्षणासम्पन्नश्च संस्कारः खल्वपि अविज्ञातमित्युच्यते। तत्रैवं सति, कचित्प्रकृत्यादेः संस्कारस्यानवगमः, क्वचिदर्थाप्रतीतिरेव, क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव सन्निमिति न विज्ञायते किमप्युक्तं भवति? प्रकरणादत्र मेघाभिधेयम्, अन्यत्रान्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रैवोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते। "सन्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि अवोचदिन्द्रो दक्षं परिजानादहीनाम्॥"—इति (ऋ० सं० ८, ७, २७, ६)। विश्वावसोर्देवगन्धर्वस्येयमार्षम्। घर्मोत्सादने विनियुक्ता। तत्रोक्तं परिषिक्ते गन्धर्वनामभिरुपतिष्ठन्तऋत्विजो यजमानश्चेति। तासामुपस्थानर्चामियं मध्ये मैत्रायणीयके। 'सन्निं' "संस्नातम्" अद्भिः परिवेष्टितं, सर्वतः परिस्नुतं, धौतं वा "मेघम्" 'अविन्दत्' अलभतेन्द्रः। क्व पुनरलभत? 'चरणे नदीनां' यत्र नदना आपश्चरन्ति, गच्छन्ति, तत्रालभत, अन्तरिक्षलोके इत्यर्थः। आह,—लब्ध्वानन्तरं किमकरोत्? इति। उच्यते,—'अपावृणोत्' अपावृतवान्, उद्घाटितवानित्यर्थः। 'दुरः' द्वारः। आह,—कस्य? उच्यते,—'अश्मव्रजानाम्' अपामश्मा मेघः, तमधि या व्रजति, स च यासां व्रजभूतो गोष्ठभूतः, ता अश्मव्रजा आपः, तासां निर्गमनद्वाराणि अपावृणोत्। या एता एवंलक्षणा आप', 'आसाम्' अस्य च इन्द्रस्य 'गन्धर्वः' विश्वावसुः 'प्रावोचत्'—'अमृतानि' नामानि, छान्दसस्तु-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तियुक्तानि, तानि हि नित्यत्वादमृतानि। आह,—कस्मात् पुनरस्येन्द्रस्यामृतानि प्रावोचदासामपाम्? इति। उच्यते, इतः,—यस्मादसाविन्द्रः 'दक्षं' दातारं मेघम्। अयम् आसाम् 'अहीनाम्' अयनानाम्, अपां द्वारेषु अपावृतेषु, दानाय समर्थो भविष्यति,—इत्येवं 'परिजानात्' परिज्ञातवान्। परिज्ञाय च 'अपावृणोत् दुरोऽश्मव्रजानाम्'। तस्मादस्येन्द्रस्यामृतानि नामानि प्रावोचदद्भिश्चानेन प्रकारेणेन्द्रेण सर्वमेवेदं जगद् ध्रियत इति आसामपि अनेन हेतुना प्रावोचदिति। एवमेतस्मिन् मन्त्रे 'चरणे नदीनाम् अविन्दत्' अपावृणोच्च दुरोऽश्मव्रजानाम्, दक्षञ्च परिजानात्'—इत्येकवाक्यतार्थसम्बन्धात् "स्त्रि" शब्दो मेघविशेषणम् उपपद्यते॥

अथवा अयमप्यस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात्,—संस्नातं मेघमविन्ददलभतेन्द्रः पर्य्येष्यमाणः, क्वाविन्दत्? चरणे नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्ध्वा च स एव इन्द्रः, तं मेघं, दक्षं दातारम्, अहीनाम् अपां परिजानात्। परिज्ञाय च समर्थोऽयमिति ततस्तस्य द्वाराण्यपावृणोत्। अश्मव्रजानामपामधो निर्गमनाय। तत एतानि निर्गतानि, अमृतानि उदकानि, शस्यसम्पत्कराणि प्रावोचदिव प्राकथयदिव,—असाविन्द्रो गन्धर्वः, आसां प्रजानां जीवध्वमेभिरुदकैरस्मद्दत्तै रति। "इन्द्रो गन्धर्वः, तस्य मरुतोऽप्सरसः"—इति श्रूयते। तस्मादिन्द्रस्यापि गन्धर्वत्वमुपपद्यत एव, स च गोः वज्रस्य धारयिता इति गन्धर्वः।

"वाहिष्ठः (२)"—इति। एतदनवगतम्। "वोढृतमः"—इत्यवगमः। "वाहिष्ठो वां हवानां सोमो दूतो हुवन्नरा। युवाभ्यां

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

भूत्वश्विना ॥"—इति (ऋ० सं० ६, २, २१, १)। गायत्री। विश्वमनसो वैयश्वस्येयमार्षम्, पितुर्वा व्यश्वस्य। प्रातरनुवाकाश्विनयोः शास्यते। 'नरा' हे नरौ! सर्वेषामेव वोढॄणां स्तोमानाम्, आह्वातॄणाञ्च। य एव एषः 'वाहिष्ठः' अतिशयेन वोढा, आह्वातृतमः, अयमेव 'दूतः' इव युवां 'हुवत्' आह्वयद्रित्यर्थः। योऽयमेवंलक्षणः 'सोमः' अस्मत्प्रेरितः, स नित्यकालमेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः। हे 'अश्विना' अश्विनौ! इति सम्बोधनम्। 'स्तोमो दूतः'—इत्येताभ्यां समानविभक्त्यन्तत्वात् "वाहिष्ट"-शब्दः सोमविशेषणामित्युपपद्यते ॥

निगमप्रसक्तमित्युच्यते,—"मनुष्याः" अपि हि "नराः" उच्यन्ते, ते हि "नृत्यन्ति" गात्राणि पुनः पुनः प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्यनुतिष्ठमानाः॥

"दूतो" (३) जवतेर्वा गत्यर्थस्य" स हि गच्छति। "द्रवतेर्वा" गत्यर्थस्यैव। "वारयतेर्वा" स हि वारयत्यनर्थान्॥

"वावशानः (४)"—इति अनवगतम्। "वष्टेर्वा" कान्त्यर्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात्। "सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम्। अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूषणस्य।"—इति (ऋ० सं० ७, ५, ३३, ५)। त्रितस्याप्तस्येयमार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'सप्त' 'स्वसॄः' स्वसारो भगिन्य इव पाद्यर्चिषः समानजन्मत्वात्। अथवा सह सर्पणात् स्वसारः,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ता हि सह सर्पन्ति 'अरुषीः' आरोचनाः, दीप्ता इत्यर्थः। या एवं-लक्षणाः अर्चिषः, ताः, अग्निः 'वावशानः' कामयमानो वावश्यय-मानो वा, शब्दं कुर्वाणः सः 'विद्वान्' आत्मीयमधिकारान् जानानः, 'मध्वः' घृतस्य हविषः पूर्णः, 'उज्जभार' ऊर्ध्वं हृतवानेषां लोकानां 'दृशे कं' दर्शनायेत्यर्थः। एवं ता ऊर्ध्वं हुत्वा दर्शनम-भिव्यञ्जयित्वा जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्तरिक्षं तत्र, 'येमे' तत्रोपनियमितवान् तद्धविः 'पुराजाः' अग्निः, स हि सर्वदेवेभ्यः प्रथम एव जातः। 'इच्छन्' 'वव्रिं' रूपं 'पूषणस्य' पूष्णः, आदित्यस्य। कथं नामासावादित्यो दीप्तरूपः स्यात्? अतोऽन्तरादित्यस्य येमे। तञ्चासावेतमर्थम् 'अविंदत्' अलभत इत्यर्थः। स एव दीप्तरूप आदित्यः संवृत्त इत्यभिप्रायः॥ एवमत्र "स्वसृर्वावशानः"—इत्यनेन सामानाधिकरण्याच्छब्दसा-रूप्याच्च "वावशाने"—इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वञ्च उप-पद्यते॥

"वार्य्यम् (५)"—इति। अनवगतम्। वृणोतेर्यद्वरयितव्यं भवति, तद्वार्य्यमित्युच्यते। अथापि। कदाचिद् वार्य्यशब्देन यद्वरतमं श्रेष्ठतमं किञ्चिद्भवति, तदुच्यते। तद्वार्य्यं वृणीमहे वरिष्ठं गोपयत्यम्। मित्रो यत् पान्ति वरुणो यदर्यमा॥"—इति (ऋ० सं० ६, २, २३, ३)। विश्वमनस इयमार्षम्। मैत्रावरुणे सूक्ते। 'तद्वार्य्यं वृणीमहे' वरयितव्यं वरणार्हं धनं वृणीमहे। हे स्तोतारः! 'वरिष्ठ' 'गोपयत्य' "गोपायितव्य" यद्रक्षणार्हमित्यर्थः। अथवा गोपयत्यां गोपितारो यस्य धनस्य

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यूयं भविष्यथ, तद् वृणीमहे। अथवा युष्मभ्यं यौष्माकीणं यद्भवति, तद् वृणीमहे। किञ्च, नित्यकालमेव मित्रावरुणार्य्यमाणः 'यत्' 'पान्ति' रक्षन्तीत्यर्थः, तद् वृणीमहे। एवमत्र च मित्रावरुणार्य्यमाणो यत् पान्ति इत्यनेन सम्बन्धात् "वार्य्य"—शब्दो धनविशेषणमित्युपपद्यते ॥

"अन्धः (१६)"—इति। अनेकार्थमनवगतम्। आध्यानीयमित्यर्थप्रतीतिः। प्रार्थनीयमन्नं भवति सर्वस्यैव। "अध्वर्य्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः। कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि ॥"—इति (ऋ० सं० २, ६, १३, १)। गृत्समदस्येयमार्षम्। रात्रिपर्य्याये शस्यते। होतुः शस्त्रे विनियुक्ता। अस्त्येव च शस्त्रस्य याज्यैषा। हे 'अध्वर्य्यवः!' 'भरत' प्रापयतेमं 'सोमम्' एतस्माद्धविर्धानादुत्तरवेदिम्, 'इन्द्राय' इन्द्रार्थम्। अथवा 'भरत' धारयताग्नेरुपरि। ततश्चैनम् 'अमत्रेभिः' अमत्रैः पात्रैः, एभिः सोमचमसैः, वषट्कारे प्राप्ते 'आसिञ्चत' तस्मिन्नग्नौ। 'मद्य' मदनीयम्, एतत्सोमाख्यम् 'अन्धः'। कस्मात् पुनरेवं ब्रवीमि ? ? इतः—यस्मात् 'कामी हि वीरः' कामयत वीरः इन्द्रः 'अस्य' सोमस्य 'सदं' सदैव, नित्यकालमेव 'पीतिं' पानमित्यर्थः। तस्मात् कारणात् 'जुहोत' तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एतं सोमम्। किमेतमेव केवलं सोममेष कामयते ? नेत्युच्यते,—'तदिदेष वष्टि' तत्तत्सोमप्रदानमेव इन्द्रो वष्टि कामयत इत्यर्थः, न केवलं रात्रिपर्य्यायेष्वित्यर्थः। तस्मादासिञ्चत इमं सोमं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मा विलम्बध्वमित्यभिप्रायः। एवमत्र दानसम्बन्धात् "अन्धः"-शब्दोऽन्नार्थ उपपद्यते। पठितमपि चान्ननामसु अनेकार्थत्वात् तु सन्दिह्यते इत्येष निगम उपात्तः॥

निगमप्रसक्तमुच्यते।—"अमत्रं पात्रम्, अमा अस्मिन् अदन्ति" अश्नन्तीत्यर्थः। अमा-शब्देन पुनर्यदनिर्मितपरिमाणं किञ्चिद् भवति, तदुच्यते, न हि तेषां परिमाणमस्ति, यावन्तस्तस्मिन्नदन्ति। "पात्रं पानात्" पीयते हि तेन॥

तमोऽप्यन्ध उच्यते। किं कारणम्? "नास्मिन्" "ध्यानं" दर्शनं कृतं "भवति" चक्षुषो दृष्टि-निरोधाल्लौकिका अपि दर्शननिरोधे सति "अन्धन्तमं इत्यभिभाषन्ते"। "स्त्रियः स॒तीस्ताँ उ॒ मे पुंस आहुः पश्यदक्ष॒ण्वान् न विचेतद॒न्धः। क॒विर्यः पुत्रः स ईमाचिके॒त यस्ता विज॒ानात् स पि॒तुष्पि॒तास॑त् ॥"—इति (ऋ० सं० २, ३, १७, १)। अस्यवामीये। त्रायतोः पालनार्थस्यात्र स्त्री-शब्दो निरुच्यते। पालयित्र्यः एवैतः सत्यः कृत्स्नस्य जगतः। एत एव रश्मयो नाड़ीभिः अध्यात्मिकीभिः अनुप्रविश्य प्राणिशरीरेष्वन्नपक्तिं कुर्वन्ति, ततः स्थितिरुपजायते, एत एव वर्षप्रदानेन कृत्स्नं जगत् त्रायन्ते, तस्मात् त्राणात् 'स्त्रियः' एताः। 'तान्'—इति नकारान्तं पदम्। 'उ'—इति पदपूरणे एव। तानेवंलक्षणान्रश्मीन् पालयितॄन् सतः। 'मे' ममेति मन्त्रदृगात्मानं निर्दिशति। ममैतान् पुंस आहुः। एत एव रश्मयो बहुप्रजानाः" इत्येवं ब्रह्मविदः आहुः। एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्ति। जगत्त्रायन्ते एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्ती-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्यभिप्रायः। आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता, तदवयवभूताश्च रश्मयः, तेन ह्यन्तर्गता आध्यात्मे पुरुषस्य विज्ञानम् उपहरन्ति। अतस्तेषां बहुप्रजानत्वमुपपद्यते। आह,—कः पुनरेतान् रश्मीनेवङ्गुणयुक्तान् पश्यतीति? 'पश्यदक्षण्वान् न विचेतदन्धः' यो हि अक्षण्वान् भवति, दर्शनवान्, विज्ञानवान्, वेदार्थविज्ञानवान्, वेदार्थविज्ञानेनोपजनितप्रज्ञः, स एव ताभ्यां गुणाभ्यां युक्तान् पश्यन्नास्ते नित्यकालं नित्ययुक्तत्वात्। इतरस्तु योऽन्धः अध्यानवान्, अश्रुतवेदोपनिषत्कः स मन्दबुद्धित्वात् 'न विचेतत्' नैतान् याथार्थ्यतः पश्यति, न विजानातीत्यर्थः यः पुनः एवं एतान् यथार्थ्यतः पश्यति, स एव 'कविः' क्रान्तदर्शनो भवति, परिनिष्ठितविद्य इत्यर्थः। स च परिनिष्ठितविद्यत्वेनैव 'पुत्रः' पुरुणो बहुनोऽहंसत्रातः। यश्चायमेवङ्गुणयुक्तः, स 'ईम् आचिकेत'। 'ईम्'—इति पदपूरणः। 'आचिकेत' स एवैतानेवम् आभिमुख्येन यथावत् पश्यति, नेतरो मूढः। यश्चैतानेवं पश्यति, स एव 'पितुः' अपि 'पिता' भवतीत्यर्थः, स हि आधिदैविकम् आत्मानम् अभिसम्पन्नो भवति, न हि तस्य पिता नाम कश्चित्, स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः। एवमेतस्मिन् मन्त्रे य एवाक्षण्वान् भवति। स एव पश्यतीत्यस्य सन्निधौ 'न विजानात्यन्धः' शब्दप्रयोगात् अदर्शनलक्षणं तमः-अन्धःशब्देनोच्यत इत्युपपद्यते ॥१॥

असश्चन्ती भूरिधारे पयस्वती। असज्यमाने इति वान्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ वनुष्यतिर्हन्ति-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्मानवगतसंस्कारो भवति। वनुयाम वनुष्यत इत्यपि निगमो भवति। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियं पापः पातापेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् तरुष्यतिरप्येवङ्कर्मा। इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति। भन्दना भन्दतेः स्तुतिकर्मणः। पुरुप्रियो भन्दते धामभिः कविरित्यपि निगमो भवति। स भन्दना उदियर्त्ति प्रजावतीरिति च। अन्येन मदाहनो याहि तूयम्। अन्येन मदहनो गच्छ क्षिप्रमाहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यादृषिर्नदो भवति नदते स्तुतिकर्मणः। नदस्य मा रुधतः काम आ गन्। नदस्य मारुधतः काम आगमद् संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥

"असश्चन्ती (७)"—इति अनवगतम्। "असज्यमाने इति वा"—इत्यर्थप्रतीतिः, "अव्युदस्यन्त्यावीति इति वा"—इति। "असश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते राजन्ती अस्य भवनस्य रोदसी अस्मे रेतः सिञ्चन्तं यन्मनुर्हितम् ॥" इति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

(ऋ० सं० ५, १, १४, १)। भरद्वाजस्येयमार्षम्। अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीये निविद्धानीये सूक्ते शस्यते। 'असश्चन्ती' असज्यमाने असंश्लिष्यमाणे परस्परतः, एते द्यावापृथिव्यौ। 'भूरिधारे' बहूदकप्रक्षरणस्वभावे एव, अथवा बहु भूतं धारयित्र्यौ। 'पयस्वती' उदकवत्यौ। 'घृतम्' उदकम्, द्वे अप्येते 'दुहाते' प्रपूरयेते, इतरेतरसम्भोगेन। 'सुकृते' शोभनकृते, अथवा शोभनानां स्वाधिकारप्रयुक्तानां कर्मणां कर्त्र्यौ। 'शुचिव्रते' शुक्लकर्मणी इत्यर्थः। 'राजन्ती' दीप्यमाने, स्वैः स्वैः तेजोभिः। 'अस्य' "भुवनस्य' भूतजातस्य 'रोदसी' रोधसी, रोधयित्र्यौ। ये एते एवंलक्षणे द्यावापृथिव्यौ, ते 'अस्मे' अस्मभ्यं 'रेतः' उदकं 'सिञ्चन्तम्' अभिमते काले। किंलक्षणं पुनः सिञ्चन्तम्? 'यत्' 'मनुर्हितम्' मनुष्यहितम्, अक्षारं, शस्यसम्पत्करमित्यभिप्रायः। एवमेतस्मिन् मन्त्रे 'भूरिधारे'—इत्येवमादिभिः समानविभक्त्यन्तत्वात् "असश्चन्ती"—इति द्यावापृथिवीविशेषणमुपपद्यते। "असज्यमाने इति" न हि ते सज्येते परस्परतः "अव्युदसन्त्यौ वा" अनुपक्षियन्त्यौ अविपर्य्यस्यन्त्यौ वा, न हि ते उपक्षीयेते विपर्य्यस्येते वेति॥

"वनुष्यति (८)"—इति "हन्तिकर्मा" हन्त्यर्थे वर्त्तमानः, "अनवगतसंस्कारो भवति"। "यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा। अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यवो वनुयाम वनुष्यतो नभन्तामन्यके समे॥" इति (ऋ० सं० ६, ३, २५, १)। नाभाकस्यार्षम्। महाव्रते महदुक्थे शस्यते। अस्याः पुनरष्टा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्षराः षट् पादाः। छन्दसां पुनरनुक्रमण्यां शौनकेनाग्निमस्तोषीत्यत आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि तेषामपीयं मध्ये हे 'इन्द्राग्नी!' 'यत्' यदा 'इमे' 'जनाः' येऽस्मदीयाः परकीयाश्च उभयेऽपि 'विह्वयन्ते' व्यत्ययेनेतरेतरम् आह्वयन्ते विजिगीषुतया। 'तना' सन्ततया 'गिरा' 'वाचा, अथवा 'तना' धनेन निमित्तभूतेन जेतव्येन पुरस्कृतेन विह्वयन्ते। तदा युवाम् 'अस्माभिः' अस्मदीयैः 'नृभिः' मनुष्यैः संहितौ भूयास्तन्ते 'वयं' युवाभ्यां सहिताः 'सासह्याम' पुनःपुनरभिभवेम। कान्? य एते 'पृतन्यवः' पृतनामस्माभिः सह कर्त्तुम् इच्छन्ति, तानभिभवेम। किञ्च, 'वनुयाम वनुष्यतः' ये च एतेषाम् अस्माभिः सह सम्पन्ना एव सम्प्रहारीभूता वनुष्यन्त्यस्मान् घ्नन्त्येव, एतांश्च वनुष्यतः वनुयामो वयं हन्म इत्यर्थः। कथं पुनर्हन्म? उच्यते यथा,—'नभन्तामन्यके समे' युवयोरनुग्रहाद्धन्म इत्यभिप्रायः। एवमेतस्मिन् मन्त्रे "सासह्याम पृतन्यतः"—इत्येनस्मिन् संग्रामाधिकारे वनुष्यतेर्हन्त्यर्थमुपपद्यते, न हि संग्रामे हननादन्यत् कर्त्तव्यमस्ति, यत् क्रियते॥

"इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम्। दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः॥"—इति (ऋ० सं० ५, ६, २, १)। वसिष्ठस्येयमार्षम्। जगती। तार्त्तीयसवनिकीये मैत्रावरुणस्य शस्त्रे विनियुक्ता। हे 'इन्द्रावरुणौ!' 'युवम्' युवामित्यर्थः। 'अध्वराय नः' यज्ञाय अस्माकं 'विशे' जनाय सर्वस्मै मनुष्यजनाय, अस्मत्सर्वकामाय

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'महि' महत्, 'शर्म' सुखं 'यच्छतम्' दत्तमित्यर्थः। 'दीर्घप्रयज्युं' "दीर्घप्रततयज्ञं" नित्ययायजूकम्, अग्निहोत्रिणम् 'अति यो वनुष्यति' "अभि जिघांसति" यो निहन्तुमिच्छति। किं तस्य? इत्युच्यते,—'वयं जयेम' 'पृतनासु' संग्रामेषु 'दूढ्यः' "दुर्धियं" पापधियं, पापया धिया हि दीर्घप्रततयज्ञमभि जिघांसति। एवमत्रापि प्रकरणात् "वनुष्यतिः" हन्त्यर्थः। अल्पप्रयोगविषयत्वाद् भाष्यकारेण निगमद्वयं पठितम्॥

व्याख्यानप्रसक्तमुच्यते,—"पापः पाताऽपेयानाम्" अपेयान्यलेह्यानि यानि, तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः। "पापत्यमानः" पुनः पुनः पात्यमानः, तेनैव पापेन कर्मणा। "अवाङेव" नरकमेव प्रति "पतति" असौ, तस्मात् "वा" पापः॥

"तरुष्यति (६), अप्येवङ्कर्मा" हन्तिकर्मेत्यर्थः। "ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि। वाजो अस्माँ अवन्तु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम्॥"—इति (ऋ० सं० ५, ४, १५, २)। वसिष्ठस्येयमार्षम्। त्रिष्टुप्। अविवाक्ये तृतीयसवने, वैश्वदेवे शस्त्रे, आर्भवे सूक्ते, निविद्धानीये शस्यते। ऋभवः उरु भासो वयम्, उरुभाभिः 'ऋभुभिः' देवैः सहिताः 'अभि वः स्याम' अभिभवेम युष्मान् वयम्। हे 'विभ्वः!' 'विभुभिः' प्रभूतबलैः युष्माभिः 'शवसा' स्वेन बलेन, एतेषामभिभवितॄणां 'शवांसि' बलान्यभिभवेम। किञ्च, 'वाजः' 'अस्मान्' 'अवन्तु'। कस्मिन्? 'वाजसातौ' संग्रामे, 'इन्द्रेण'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

च 'युजा' संयुक्ताः सन्तो वयं 'तरुषेम' हन्मैनं 'वृत्रं' शत्रुमित्यर्थः ।
अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थ उपपद्यते ॥

"भन्दना (१०), भन्दतेः स्तुतिकर्मणः"; स्तुत्यर्थे वर्त्तमानस्य ।
"पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आविवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥"
—इति ( ऋ० सं० १, ८, २० ४ )। विश्वामित्रस्येयमार्षम् ।
पृष्ठ्यस्य प्रथमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते । 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, विनिर्माणं कृत्स्नस्य जगतः, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते । 'वयुनञ्च' प्रज्ञानमयमेव 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्निः 'आविवेश' 'रोदसी द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, तमेवङ्गुणयुक्तमग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'भन्दते' स्तौति, 'धामभिः' नामभिः अनेकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः । पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुतेः कुर्य्यात् ? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य ॥

"स भन्दना उदियर्त्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि । ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्द्रविन्द्रमस्मभ्यं याचतात् ॥"—इति ( ऋ० सं० ७, ३, २०, १ )। भौमोऽत्रिः, तस्येयमार्षम् । जगती । "प्रत आशवः पवमान धीजवः"—इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमी पावमानसौमी ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यदिममयाज्ञं कर्मोपनमेत्तत्सुयामहमेतं सोमं तत्रेति, य एवं नित्यकालमास्ते 'सः' एष साम्प्रतमस्मिंस्तोमकर्मणि उपनीते हे सोम! तव 'भन्दनाः' स्तुतीः 'उदीरयति'। 'प्रजावतीः' प्रजा-संयुक्ताः, प्रजालिङ्गा इत्यर्थः। 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः, सर्वतो वा विश्वायुः। 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बन्धात् स्तुतीनाम्, नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति ह्युक्तम्। 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः। 'अह-र्दिवि' अहनि वा रात्रौ च, रात्रिपर्य्यायाभिप्रायेण नित्यकालमेवे-त्यभिप्रायः। कं पुनरर्थमुपेत्य स्तुतीरुदीरयति? 'ब्रह्म प्रजावत्' अन्नं प्रजासंयुक्तं भोक्तृसहितम्। अपि च 'रयिम्' धनं गोहिर-ण्यादि। 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पीतः' त्वमस्माभिरस्मिन् कर्मणि। हे 'इन्द्रो' सोम! इदमस्म-दर्थं याचतात्' याचस्वेत्यर्थः। एतमर्थमभिप्रेत्य स्तुतीरुदीरयति। भन्दना उदियर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "भन्दना" शब्देनोच्यन्ते इत्युपपद्यते। पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पुरुप्रियो भन्दते धामभिः"—इति नामरूपसम्बद्धं "स भन्दना उदियर्त्ति प्रजावतीः"—इति इदन्तु च। उभयथा प्रयोगोऽस्ती-त्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च॥

"आहनः (११)"—इति। एतत् पदं सम्बोधनमनवगतम्, अप्रतीयमानार्थत्वात्। "आहंसि"—इत्यर्थप्रतीतिः। "न



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति। अन्येन मदाहनो याहि तूयं तेन विवह रथ्येव चक्रा॥"—इति ( ऋ० सं० ७, ६, ७, ३ )। यमस्य यम्याश्च संवादसूक्तम्, तत्र यमस्येयमार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति,—हे यमि! मामंस्था साम्प्रतं रहो वर्त्तत इति, किन्तु 'न तिष्ठन्ति' मुहूर्त्तमपि, एते जनाः रन्ध्रान्वेषणतत्परा इत्यभिप्रायः। अपि च, 'न निमिषन्ति' अनिमिषाः, आदरवन्त इत्यभिप्रायः। के पुनस्ते? इत्युच्यते,—'एते देवानां' स्वभूताः, य इह एतस्मिन् लोके 'स्पशः' स्पाशयितारः, कृताकृतानां कर्मणाम्। के पुनस्ते? इति। उच्यते,—अहश्च, रात्रिश्च, उभे च सन्ध्ये, सूर्य्याचन्द्रमसौ, वायुश्च, अन्तरपुरुषश्च इत्येवमादयः, न ह्येतेषां किञ्चिदविदितं परोक्षमस्ति इत्यभिप्रायः। अतो ब्रवीमि,—'अन्येन' अन्यकुलजेन केनचित् पुरुषेण, 'मत्' मत्तः, त्वं हे 'आहनः!' मैथुनं 'याहि' 'तूयं' "क्षिप्रम्"। "आहंसि इव" असभ्यमेतत् "भाषमाणा" त्वम्, नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव, किं पुनः कर्तुम्? तस्मान्मत्तोऽन्येन मैथुनार्थं चर। 'तेन' एव सह 'विवह' अभ्युद्यच्छस्व आत्मानं मैथुनकर्मणि। 'रथ्येव चक्रा' रथचक्रे इव, यथैकमक्षं रथचक्रे द्वे अभ्युद्यतः, एवमेकमनस्त्वमुपपाद्य तेनैकभूतेन मनसा अक्षेणैवोभेऽपि शरीरे, तच्च तस्य कामिनः सक्तम्, स च तव, तेनैव सह तवैतस्मिन्नर्थे एकमनस्त्वमस्त्विति, न मया सार्द्धमेतस्मिन्नर्थेऽभ्युद्यच्छमाना न मां शक्ष्यसे कम्पयितुमित्यभिप्रायः॥ एवमेतस्मिन् मन्त्रेऽनिष्टत्वान्मैथुनसमाचारस्य "आहनः"—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्येतद् यमीविषयं सन्धानम्। आहन्यत "इव" हि स यमं तयाऽनेन दुर्वचनेन। तस्मात् सैव सम्बोध्यते आहनः। इति "एतस्मात्" एव कारणात् "आहनः स्यात्" योऽयम् उपदेशः स्त्रियै, असावपि हि यस्य सन्निधौ सङ्कीर्त्त्यते, स आहन्यत इव असभ्यत्वात्, तस्य अयशियो वै पुरुषोऽमेध्य आहनः 'स्याज्जायत इति विज्ञायते ॥

"नदः (१२)"—इति, एतदनवगतम्। "ऋषिः नदो भवति" —इति शब्दस्य पर्य्यायेण तत्रवचनम्। "नदतेः स्तुतिकर्मणः" इति व्युत्पत्तिः। नदिता वा नदतीवेत्यर्थप्रतीतिः। "नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित्। लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम् ॥"—इति (ऋ० सं० २, ४, २२, ४)। अगस्त्यलोपामुद्राब्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम्। सा अब्रवीदगस्त्यं भर्त्तारमभिप्रेत्य 'नदस्य' "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य 'रुधतः' संरुद्धवतः इन्द्रियग्रामं 'मा' माम् अयं 'कामः' 'आगन्' आगतवान्, येनाहं साम्प्रतं पीड्ये। सा पुनरेवं न जाने। किम् 'इतः' एव 'आजातः' अस्मच्छरीराज्जातः, ममोपरि ह्यभिव्यक्तोऽस्मत्पीडनाय,—अथवा 'अमुतः' अगस्त्यशरीरात्? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात्। अतएव "स्मरः" —इति काम उच्यते। तस्मादुपपद्यते इतो वास्मच्छरीरात्,—अमुतो वा नदशरीरात्, कुतः? इति, न जाने इति। अथवा अन्यत एव 'कुतश्चित्'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अयमागतः स्यात्? इत्येतदपि तत्त्वतो न जाने। इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसो वर्षितारम्, अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति, यदि न ममासावुपरि प्रजननं निरोत्स्यात्, ततो नायं कामो मामागमिष्यत्, इत्येवं दोषेण गच्छति। "रिणाति"—इति गतिकर्मसु पठितम्। अथवा चेतसा 'नीरिणाति' उपगच्छतीत्यर्थः, इष्टपुरुषानुचिन्तना हि कामार्त्तायाः स्त्रियाः स्वभाव एव। तस्मादेवमप्युपपद्यते। 'धीरं' स्थिरबुद्धिं ब्रह्मचर्य्ये 'अधीरा' सङ्क्षुब्धसर्वेन्द्रियग्रामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति। 'श्वसन्त' चेतसा व्यावर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्य्ये कृतबुद्धिं तथापि धयत्येव। "श्वसति, नदति"—इत्येवं गतिकर्मसु पठितम्। एवं लोपामुद्रावाक्ये "नदस्य रुधतो मामागमत् कामः"—इति प्रकरणादृषिर्नदशब्देनोच्यत इत्युपपद्यते। "संरुद्धप्रजननस्य ब्रह्मचारिणः इत्यृषिपुत्र्या विलपितं वेदयन्ते"—इति निदानप्रख्यापनम्॥ २॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। अश्नीतेरित्येके। अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। लोपाशः सिंहं प्रत्यञ्चमत्साः। क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येकेऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

क्षरति सर्वं क्षियतिनिगमा इति शाकपूणिः श्वात्रमिति क्षिप्रनामाशु अतनं भवति। स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः। स पतत्रि चेत्वरं स्थावरं जङ्गमञ्च यत्तत् क्षिप्रमग्निरकरोज्जातवेदाः। ऊतिरवनात्। आ त्वा रथं यथोतय इत्यपि निगमो भवति। हासमाने इत्युपरिष्टाद्व्याख्यास्यामः। वम्रकः पड्भिरुपसर्पदिन्द्रम्। पानैरिति वा स्पाशनैरिति वा (स्पशनैरिति वा) ससं न पक्वमविदच्छुचन्तम्। स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनं तदिवाविदज्ज्वल्यमानम्। द्विता च सत्ता स्वधया च शम्भुः। द्वैधं सत्ता मध्यमे च स्थान उत्तमे च। शम्भुः सुखभूः। मृगं न व्रा मृगयन्ते। मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥

"सोमो अक्षाः (१३)" इत्येते द्वे पदे। अत्र अक्षा इत्येतत् पदं अनवगतम्, पक्षेण चानेकार्थम्। अस्यैव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः। कथं नाम "न यस्य द्यावापृथिवी"—इत्येतदेवोदाहरणमत्र उपलक्षितं स्यात्? अत्र हि अक्षा इत्येष शब्दः, सोमशब्देन सम्बद्धः, यथा भूतशब्देन, मेषशब्दः—"मेषो भूतो३ भियन्नयः"—इत्यत्र; यथा वा "अग्निर्नेयै"—इत्यत्राग्निशब्दः। अत्र वाक्षोतिपक्षे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

च 'युजा' संयुक्ताः सन्तो वयं 'तरुषेम' हन्मैनं 'वृत्रं' शत्रुमित्यर्थः ॥
अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थ उपपद्यते ॥

"भन्दना (१०), भन्दतेः स्तुतिकर्मणः" स्तुत्यर्थे वर्त्तमानस्य ।
"पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आविवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः ॥"
—इति ( ऋ० सं० १, ८, २० ४ )। विश्वामित्रस्येयमार्षम् ।
पृष्ठ्यस्य प्रथमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते। 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः' 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावतामपि मध्ये प्रज्ञावान्, विनिर्माणं कृत्स्नस्य जगतः, अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते। 'वयुनञ्च' प्रज्ञानमयमेव 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्ययमेवाग्निः 'आविवेश' 'रोदसी द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, तमेवङ्गुणयुक्तमग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'भन्दते' स्तौति, 'धामभिः' नामभिः अनेकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुतेः कुर्य्यात्? तस्मादुपपद्यते स्तुत्यर्थत्वमस्य ॥

"स भन्दना उदियर्त्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि। ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्द्रविन्द्रमस्मभ्यं याचतात् ॥"—इति ( ऋ० सं० ७, ३, २०, १ )। भौमोऽत्रिः, तस्येयमार्षम्। जगती। "प्रत आशवः पवमान धीजवः"—इत्यष्टाचत्वारिंशत्के महासूक्ते एकचत्वारिंशत्तमी पावमानसौमी।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यदिममयाज्ञं कर्मोपनमेत्तत्सुयामहमेतं सोमं तत्रेति, य एनं नित्यकालमास्ते 'सः' एष साम्प्रतमस्मिंस्तोमकर्मणि उपनीते हे सोम! तव 'भन्दनाः' स्तुतीः 'उदीरयति'। 'प्रजावतीः' प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः। 'विश्वायुः' विश्वमयतीति विश्वायुः, सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः, सर्वतो वा विश्वायुः। 'विश्वाः' सर्वप्रकाराः, नामबन्धुकर्मरूपसम्बन्धात् स्तुतीनाम्, नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति ह्युक्तम्। 'सुभराः' सुभृताः, सुपुष्टाः, स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः। 'अहर्दिवि' अहनि वा रात्रौ च, रात्रिपर्य्यायाभिप्रायेण नित्यकालमेवेत्यभिप्रायः। कं पुनरर्थमुपेत्य स्तुतीरुदीरयति? 'ब्रह्म प्रजावत्' अन्नं प्रजासंयुक्तं भोक्तृसहितम्। अपि च 'रयिम्' धनं गोहिरण्यादि। 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पीतः' त्वमस्माभिरस्मिन् कर्मणि। हे 'इन्द्रो' सोम! इदमस्मदर्थं याचतात्' याचस्वेत्यर्थः। एतमर्थमभिप्रेत्य स्तुतीरुदीरयति। भन्दना उदियर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "भन्दना" शब्देनोच्यन्ते इत्युपपद्यते। पूर्वमाख्यातपदसम्बद्धमुदाहरणं "पुरुप्रियो भन्दते धामभिः"—इति नामरूपसम्बद्धं "स भन्दना उदियर्त्ति प्रजावतीः"—इति इदन्तु च। उभयथा प्रयोगोऽस्तीत्युभयमुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च॥

"आहनः (११)"—इति। एतत् पदं सम्बोधनमनवगतम्, अप्रतीयमानार्थत्वात्। "आहंसि"—इत्यर्थप्रतीतिः। "न



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति। अन्येन मदाहनो याहि तूयं तेन विवह रथ्येव चक्रा॥"—इति (ऋ० सं० ७, ६, ७, ३)। यमस्य यम्याश्च संवादसूक्तम्, तत्र यमस्येयमार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति,—हे यमि! मामंस्था साम्प्रतं रहो वर्त्तत इति, किन्तु 'न तिष्ठन्ति' मुहूर्त्तमपि, एते जनाः रन्ध्रान्वेषणतत्परा इत्यभिप्रायः। अपि च, 'न निमिषन्ति' अनिमिषाः, आदरवन्त इत्यभिप्रायः। के पुनस्ते? इत्युच्यते,—'एते देवानां' स्वभूताः, य इह एतस्मिन् लोके 'स्पशः' स्पाशयितारः, कृताकृतानां कर्मणाम्। के पुनस्ते? इति। उच्यते,—अहश्च, रात्रिश्च, उभे च सन्ध्ये, सूर्य्याचन्द्रमसौ, वायुश्च, अन्तरपुरुषश्च इत्येवमादयः, न ह्येतेषां किञ्चिदविदितं परोक्षमस्ति इत्यभिप्रायः। अतो ब्रवीमि,—'अन्येन' अन्यकुलजेन केनचित् पुरुषेण, 'मत्' मत्तः, त्वं हे 'आहनः!' मैथुनं 'याहि' 'तूयं' "क्षिप्रम्"। "आहंसि इव" असभ्यमेतत् "भाषमाणा" त्वम्, नाहमेतदसभ्यं श्रोतुमप्युत्सहे तव, किं पुनः कर्तुम्? तस्मान्मत्तोऽन्येन मैथुनार्थं चर। 'तेन' एव सह 'विवह' अभ्युद्यच्छस्व आत्मानं मैथुनकर्मणि। 'रथ्येव चक्रा' रथचक्रे इव, यथैकमक्षं रथचक्रे द्वे अभ्युद्यतः, एवमेकमनस्त्वमुपपाद्य तेनैकभूतेन मनसा अक्षेणैवोभेऽपि शरीरे, तच्च तस्य कामिनः सक्तम्, स च तव, तेनैव सह तवैतस्मिन्नर्थे एकमनस्त्वमस्त्विति, न मया सार्द्धमेतस्मिन्नर्थेऽभ्युद्यच्छमाना न मां शक्ष्यसे कम्पयितुमित्यभिप्रायः॥ एवमेतस्मिन् मत्तोऽनिष्टत्वान्मैथुनसमाचारस्य "आहनः"—

CC-0 Vasishtha Tripathi Collection. Digitized by eGangotri

इत्येतद् यमीविषयं सन्धानम्। आहन्यत "इव" हि स यमं तयाऽनेन दुर्वचनेन। तस्मात् सैव सम्बोध्यते आहनः। इति "एतस्मात्" एव कारणात् "आहनः स्यात्" योऽयम् उपदेशः स्त्रियै, असावपि हि यस्य सन्निधौ सङ्कीर्त्त्यते, स आहन्यत इव असभ्यत्वात्, तस्य अयज्ञियो वै पुरुषोऽमेध्य आहनः 'स्याज्जायत इति विज्ञायते ॥

"नदः (१२)"—इति, एतदनवगतम्। "ऋषिः नदो भवति" —इति शब्दस्य पर्य्यायेण तत्त्ववचनम्। "नदतेः स्तुतिकर्मणः" इति व्युत्पत्तिः। नदिता वा नदतीवेत्यर्थप्रतीतिः। "नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित्। लोपामुद्रा वृषणं नीरिणाति धीरमधीरा धयति श्वसन्तम् ॥"—इति (ऋ० सं० २, ४, २२, ४)। अगस्त्यलोपामुद्राब्रह्मचारिसूक्तसंवादे लोपामुद्राया इयमार्षम्। सा अब्रवीदगस्त्यं भर्त्तारमभिप्रेत्य 'नदस्य' "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य 'रुधतः' संरुद्धवतः इन्द्रियग्रामं 'मा' माम् अयं 'कामः' 'आगन्' आगतवान्, येनाहं साम्प्रतं पीड्ये। सा पुनरेवं न जाने। किम् 'इतः' एव 'आजातः' अस्मच्छरीराज्जातः, ममोपरि ह्यभिव्यक्तोऽस्मत्पीड़नाय,—अथवा 'अमुतः' अगस्त्यशरीरात्? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात्। अतएव "स्मरः" —इति काम उच्यते। तस्मादुपपद्यते इतो वास्मच्छरीरात्, —अमुतो वा नदशरीरात्, कुतः? इति, न जाने इति। अथवा अन्यत एव 'कुतश्चित्'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अयमागतः स्यात्? इत्येतदपि तत्त्वतो न जाने। इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसो वर्षितारम्, अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति, यदि न ममासावुपरि प्रजननं निरोत्स्यात्, ततो नायं कामो मागमिष्यत्, इत्येवं दोषेण गच्छति। "रिणाति"—इति गतिकर्मसु पठितम्। अथवा चेतसा 'नीरिणाति' उपगच्छतीत्यर्थः, इष्टपुरुषानुचिन्तना हि कामार्त्तायाः स्त्रियाः स्वभाव एव। तस्मादेवमप्युपपद्यते। 'धीरं' स्थिरबुद्धिं ब्रह्मचर्य्ये 'अधीरा' सङ्क्षुब्धसर्वेन्द्रियग्रामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति। 'श्वसन्त' चेतसा व्यावर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्य्ये कृतबुद्धिं तथापि धयत्येव। "श्वसति, नदति"—इत्येवं गतिकर्मसु पठितम्। एवं लोपामुद्रावाक्ये "नदस्य रुधतो मामागमत् कामः"—इति प्रकरणादृषिर्नदशब्देनोच्यत इत्युपपद्यते। "संरुद्धप्रजननस्य ब्रह्मचारिणः इत्यृषिपुत्र्या विलपितं वेदयन्ते"—इति निदानप्रख्यापनम्॥ २॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। अश्नीते रित्येके। अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। लोपाशः सिंहं प्रत्यञ्चमत्साः। क्षियति निगमः पूर्वः क्षरतिनिगम उत्तर इत्येकेऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

क्षरति सर्वं क्षियतिनिगमा इति शाकपूणिः श्वात्रमिति क्षिप्रनामाशु अतनं भवति। स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्ज्ञातवेदाः। स पतत्रि चेत्वरं स्थावरं जङ्गमञ्च यत्तत् क्षिप्रमग्निरकरोज्ज्ञातवेदाः। ऊतिरवनात्। आ त्वा रथं यथोतय इत्यपि निगमो भवति। हासमाने इत्युपरिष्टाद्व्याख्यास्यामः। वम्रकः पड्भिरुपसर्पदिन्द्रम्। पानैरिति वा स्पाशनैरिति वा (स्पशनैरिति वा) ससं न पक्वमविदच्छुचन्तम्। स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनं तदिवाविदज्ज्वाज्वल्यमानम्। द्विता च सत्ता स्वधया च शम्भुः। द्वैधं सत्ता मध्यमे च स्थान उत्तमे च। शम्भुः सुखभूः। मृगं न व्रा मृगयन्ते। मृगमिव व्रात्याः प्रैषाः॥ ३॥

"सोमो अक्षाः (१३)" इत्येते द्वे पदे। अत्र अक्षा इत्येतत् पदं अनवगतम्, पक्षेण चानेकार्थम्। अस्यैव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः। कथं नाम "न यस्य द्यावापृथिवी"—इत्येतद्देवोदाहरणमत्र उपलक्षितं स्यात्? अत्र हि अक्षा इत्येष शब्दः, सोमशब्देन सम्बद्धः, यथा भूतशब्देन, मेषशब्दः—"मेषो भूतोऽभियन्नयः"—इत्यत्र; यथा वा "अग्निर्नेयै"—इत्यत्राग्निशब्दः। अत्र वाश्नोतिपक्षे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अक्षा इति अस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति। तस्मादयमनन्तर उपलक्ष्यते अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्त्यर्थं सोमशब्दः समाम्नात एकपदसमाम्नाते प्राप्ते सति॥

"न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि॥" इति (ऋ० सं० ८, ४, १५, १)। रेणुर्नाम विश्वामित्रस्य पुत्रः, तस्येयमार्षम्। ऐन्द्रे सूक्ते सूर्यस्तुन्नामैकाहः, तत्रेयं निष्कैवल्यशस्त्रे निविद्धानीये शस्यते। 'न यस्य द्यावापृथिवी' न यस्य इन्द्रस्य द्यावापृथिव्यौ महिमानं 'अश्नुवाते' व्याप्नुत इत्यर्थः। 'न' 'धन्व' उदकम्, तद्धि धन्वत्यन्तरिक्षलोकात्। 'न अन्तरिक्षम्' 'न' 'अद्रयः' पर्वताः अश्नुवाते महिमानम्। किं तर्हि? सोम एवाक्षाः महिमानमश्नोतीत्यर्थः। कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमानमश्नोतीति? इतः,— 'यत् अस्य मन्युः अधिनीयमानः' यस्मादस्येन्द्रस्य मन्युः क्रोधः सोमेन पीतेन सता मदसामर्थ्यादुपरि शत्रूणां नीयमानः प्राप्यमानः शृणाति। 'वीळु'। यदपि 'वीळु' दृढं सन्नद्धं शत्रुबलं भवति, तदपि शृणात्येव, हिनस्तीत्यर्थः। 'रुजति' च 'स्थिराणि' अपि दृढानि मेघवृन्दानि भिनत्तीत्यर्थः। एवमेतस्मिन् मन्त्रे व्याप्त्यर्थस्य "अश्नोतेः" अक्षा इत्येष शब्दो निरुच्यते "इत्येवमेके" मन्त्रार्थविदो मन्यन्ते॥

"अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोषते॥"—इति (ऋ० सं०

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

७, ५, १३, ४)। सप्तर्षीणामार्षम्। वृहती। पावमानी सौमी। 'अनूपे' देशे 'गोमान्' गोभिः सहितो यदा 'अक्षाः' क्षियति, निवसति, अथ तदा सुयवसत्वात् तस्य देशस्य 'सोमो दुग्धाभिः' पुनः पुनः दुग्धाभ्योऽपि गोभ्यः क्षरत्येव। कथं पुनः क्षरति ? इति। उच्यते,—समुद्रं न संवरणानि समुद्रमिव संवरणान्युदकानि, उदकानि हि देशान्तरात् संवृण्वन्ति, तानि यथा सर्वेभ्यो देशेभ्यः संसृत्य समुद्रमाभिमुख्येन 'अग्मन्' गच्छन्ति, एवं दुग्धाभ्यः सोमः सर्वेभ्यो गात्रेभ्यः संसृत्य उधः प्रतिक्षरति मदायेन्द्रस्य। अथ यदैवं प्रक्षरति, तेन सोमेनामावास्यायां सान्नाय्येन तृप्त इन्द्रः 'मन्दी' हर्षशीलः, यजमानस्य शत्रून् 'तोषते' हिनस्तीत्यर्थः। "नितोषयति, निवर्हयति"— इति हन्तिकर्मसु पठितम्। एवमेतस्मिन् मन्त्रे "क्षियति-निगमः पूर्वः" - "अनूपे गोमान् गोभिरक्षाः"--इत्येषः "क्षरति-निगमः उत्तरः"—"सोमो दुग्धाभिरक्षाः"—इत्यत्र एवम् "एके" मन्त्रार्थविदो मन्यन्ते। तच्च तथैवोपव्याख्यातम्। "सर्वे" एवैते त्रयोऽपि "क्षियतिनिगमाः" "इति" "शाकपूणिः" आचार्यो मन्यते। न यस्य द्यावापृथिव्यौ निवासः, न धन्व, न अन्तरिक्षं निवासः, किं तर्हि ? सोम एव इन्द्रस्य निवासः। तस्य सोमस्य किम्। इति। उच्यते,—यदस्य मन्यूरधि शत्रूणां नीयमानः, शृणाति वीलु रुजति स्थिराणि। समानमन्यत् पूर्वेणैवार्थेन। "अनूपे गोमान् गोभिरक्षाः"—इत्यत्र निवासार्थतैव पुर्वस्मिन्नेवार्थे। अथ सोमो दुग्धास्वपि गोषूधः निवसति, न निर्दुग्धाः कर्त्त

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

शक्यन्ते इत्यभिप्रायः। एवमेते सर्वे त्रयोऽपि "क्षियतिनिगमाः" —इति "शाकपूणिः" आचार्य्यो मन्यते ॥

"श्वात्रम् (१४)—इति एतदनवगतम्। "आशु अनतं भवति"—इति शब्दसमाधिः। "क्षिप्रनाम"—इत्यभिधेयवचनम्। "यो होतासीत् प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना-वृणानाः। स पतत्रीत्वरं जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥" —इति ( ऋ० सं० ८, ४, १०, ४ )। इयं हविष्पाङ्क्तीये सूक्ते। तत् पुनर्मूर्द्धन्वताङ्गिरसेन दृष्टम्, वामदेव्येन वा। पृष्ठ्यस्य पञ्चमेऽहनि अग्निमारुते शस्त्रे निविद्धानीयं तद्भवति। 'यः' अग्निः 'होतासीत्' आहोता देवानाम्, 'प्रथमः' प्रधानः, मनुष्य-होतुः सकाशात्। 'देवजुष्टः' देवैरासेवितः। 'यं' 'समाञ्जन्' समुक्षितवन्तः। केन ? 'आज्येन' 'आवृणानाः' सेवमानाः; भजमाना इत्यर्थः। तस्य किम् ? इति। उच्यते,—सः पत्रत्रीत्वरम्' सोऽग्निः पतत्रिः, यदेतदितश्चेतश्च पतति, इत्वरश्च पक्ष्यादि, 'स्था' स्थावरञ्च वृक्षादि, 'जगत्' यदेतज्जङ्गमादि। तस्य किम्? इति। उच्यते,—तत् सर्वं प्रलयकाले 'श्वात्रं' क्षिप्रमात्मसात् 'अकृणोत्' "अकरोत्" 'जातवेदाः' अग्निः। एवमेतस्मिन् मन्त्रे "श्वात्रमिति" इत्येतत् "क्षिप्रनाम"। पतत्रि-स्थावर-जङ्गमानां क्षिप्रदहनादग्नि, किमन्यत् कुर्य्यात् ? तस्मा-दुपपद्यते क्षिप्रनामेति ॥

"ऊतिः (१५"—इति, अनवगतम्। "अवतम्"—इत्यर्थ-प्रतीतिः। "अवनात्" रक्षणादित्यर्थः। आ त्वा रथं यथोतये

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुम्नाय वर्त्तयामसि। तुविकूर्मिं मृतीषहमिन्द्र शविष्ठ सत्पते॥" —इति (ऋ० सं० ६, ५, १, १)। प्रियमेधस्यार्षम्। हे इन्द्र! 'त्वा' त्वाम् 'आवर्त्तयामसि' आवर्त्तयामहे। किमर्थम्? 'ऊतये' अस्माकं रक्षणाय, 'सुम्नाय' सुखाय च। कथं पुनरावर्त्तयामहे? इति। उच्यते,—'रथं यथा' शक्तो हि कश्चिद् यथा रथमावर्त्तयेत्, एवमावर्त्तयामहे वयं त्वां स्तुतिभिः। किंलक्षणं पुनर्भवन्तमावर्त्तयामहे? उच्यते,—'तुविकूर्मिम्' बहूनामनेकप्रकाराणां कर्मणां कर्त्तारम्। 'ऋतीषहम्' च, आर्त्तानामभिभवितारम्। हे 'इन्द्र!' 'शविष्ठ' बलिष्ठ! 'सत्पते' सतां पते! एवमावर्त्तनेनैकवाक्याभिसम्बन्धेन "ऊति" शब्दो रक्षणार्थ इत्युपपद्यते॥

"हासमाने (१६)"—इति। "उपरिष्टाद् व्याख्यास्यामः" "प्रपर्वतानामुशती उपस्थात्"—इत्यत्र॥

"पड्भिः (१७)"—इति, अनवगतम्। "पानैरिति वा स्पर्शनैरिति वा"—इति शब्दसमाधौ। "एवा महो असुर वक्षथाय वम्रकः पड्भिरुपसर्पदिन्द्रम्। स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः॥"—इति (ऋ० सं० ८, ५, १५, ६)। वम्रो नाम वैखानसः, तस्येयमार्षम्। ऐन्द्री। य एष एतस्मिन् सूक्ते स्तुतिप्रकारोऽधिकृतः 'एवा' एवम् अनेन प्रकारेण वर्त्तमान! हे इन्द्र! 'असुर' असुमन्! प्रज्ञानवन्! बलवन्! वा 'वक्षथाय' स्तुतिवक्त्रे, महते यजमानाय, पूर्वकल्पान्तरीणाय, पूर्वकल्पान्तरीण एव 'वम्रकः' 'पड्भिः' सोम-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पानैरभ्युदितैः, अथवा गुणस्पाशनैः स्तुतिगतैः, 'उपसर्पत्' उपसृप्तवान्, अन्यकल्पान्तरीणम् 'इन्द्रम्'। 'सः' तेन तथा 'इयानः' ईयमानः, अनुस्रियमाणः 'करति' कृतवान्। किम्? 'स्वस्तिम्' स्वस्त्ययनम्। 'अस्मै' यजमानाय। यतो ब्रवीमि,—साम्प्रतमहमेतस्मिन् कल्पे वम्रकः, त्वञ्चेन्द्रः, ता एवैताः स्तुतयः, याभिरहमुपासर्पं साम्प्रतं भवन्तम्, स त्वमेवं विज्ञाय, अस्मै वर्त्तमानाय यजमानाय स्वमधिकारं जानानः, कुरु स्वस्त्ययनम्। किञ्च, 'इषमूर्जाम्'। 'इषम्' अन्नं व्रीहियवादि, 'ऊर्जाम्' क्षीरादि। 'सुक्षितिं' च, शोभननिवासञ्च। 'विश्वम्' एतत् सर्वम् 'आभाः' आभिमुख्येनास्मै यजमानाय भावयस्व॥ एवमेतस्मिन्मन्त्रे "पड्भिः"—इत्येतत् पानाभिधानं शब्दसारूप्यात् प्रकरणाच्च स्पाशानाभिधानं वेत्युपपद्यते॥

"ससम् (१८)"—इति अनवगतम्। "स्वपनम्"—इत्यवगमः। "प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः उपसर्पदुर्वीः। ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥"—इति (ऋ० सं० ८, ३, १४, ३)। अग्नेर्वैश्वानरस्य, अग्नेर्वा सूचीकस्य, सप्तेर्वा जम्भरस्य इयमार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'प्रमातुः प्रतरम् गुह्यम्' प्रकर्षेण गततरं गह्वरं; मातुः सर्वनिर्मातुः भूमेः, अग्निः 'वीरुधः' दग्धुम् 'उपसर्पत्' 'उर्वीः' ऊर्णुवत्यः, प्रच्छाद्य भूमेर्निर्झरप्रदेशम्, तस्मिन् निर्झरप्रदेशे वर्त्तमानाः, तत्र हि ताः सुविवृद्धाश्च भवन्ति। कथमुपसर्पत? इति। उच्यते,—'प्रमातुः

CC-O. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रतरं गुह्यमिच्छन् कुमारो न' स्तनपानाय मातुः यथा कुमारः, प्रकर्षेण गुह्यतरं सर्वाङ्गेभ्यः स्तनप्रदेशम्, स्तनपानम् इच्छन् उपसर्पेत्, एवं योऽग्निः बह्वोषधिके भूमेर्निर्भरप्रदेशे कुमार इव स्तनप्रदेशमिवोपसर्पत्। तत्रैव च निर्भरप्रदेशे 'रिरिह्वांसं' पुनः-पुनरास्वादयमानम्, ओषधीः 'रिपः' अस्या एव भूमेः 'उपस्थे' उपस्थाने, निर्भरे हि भूमेः प्रदेशे आप उपतिष्ठन्त इति निर्भर एवोपस्थो भूमेः। तस्या एव 'अन्तः' मध्ये इत्यर्थः। तस्मिन्ने-वलक्षणे प्रदेशे, तमग्निम् 'अविदत्' कश्चित् ऋषिः अन्यो वा। ओषधीरास्वादयन्तं कथं पुनरविदत्? इति। उच्यते,—'ससं न पक्वम्' अविदत्, यथैव स्वपनशीलं "माध्यमिकं ज्योतिः" वैद्युताख्यं पक्वमभिव्यक्तम्, वर्षासु उपर्यवस्थानादयत्नेनैव दृश्यते, एवं निर्भरान् प्रविष्टमपि सन्तमग्निमतिमहत्त्वादर्चिषोऽविदद्देवा-पश्यत्। 'शुचन्त' दीप्यमानमित्यर्थः। निर्भरेऽन्योऽनुप्रविष्टो न विज्ञायते, अग्निस्तु निर्भरस्थोऽपि स्वया दीप्त्या विज्ञायत एवेत्यभिप्रायः। य एवङ्गुणयुक्तोऽग्निः स इदं नाम करोतु— इत्येवमाशीर्योज्या। न ह्यष्टौ मासान् माध्यमिकं ज्योतिर्दृश्यते, ततः "अनित्यदर्शनम्" तस्मादनित्यदर्शनात् "स्वपनम्"—इत्यु-च्यते, पक्वं नामाभिव्यक्तमित्युच्यते॥ एवमिह शब्दसारूप्यात् अर्थोपपत्तेश्च "ससम्"—इत्यनेन शब्देन स्वपनमुच्यत इत्यु-पपद्यते॥

"द्विता (१६)"—इति, अनवगतम्। "द्वैधम्"—इत्यव-गमः। "यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्ता

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वधया च शम्भुः। तस्यानुधर्म प्रयजा चिकित्वोऽथा नो धा अध्वरं देववीतौ ॥"—इति (ऋ० सं० ३, १; १७, ५)। कतस्य वैश्वामित्रस्येयमार्षम्। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने!' पृथिवीस्थान! 'त्वत्' त्वत्तः, 'यः' 'पूर्वः' 'होता' मध्यमस्थानो वायुः, असावपि हि दूतो देवानामिति श्रूयते,—"आ दूतो अग्निमभरद् विवस्वतः"—इति। वैद्युतोऽग्निरिति केचिन्मन्यन्ते। 'यजीयान्' यष्टृतरः। 'द्विता च सत्ता' द्वैधं यस्य विद्यमानता,—"मध्यमे च स्थाने" वैद्युतभावेन, "उत्तमे च" स्थाने सूर्य्यभावेन। 'स्वधया च' अन्नेन, सर्वभूतानां वर्षाद्वारेण। यः 'शम्भुः' "सुखभूः" सुखस्य भावयिता। तस्य किम्? इति। उच्यते,—'तस्य अनुधर्म' वायोर्वृत्तिलाभमन्वात्मनो दीप्तिलक्षणां वृत्तिमतिलाभमाप्नुवन्, "वायुर्वा अग्नेस्तेजः, तस्माद् वायुरग्निमन्वेति"—इति ह विज्ञायते। हे अग्ने! 'प्रयज' प्रकर्षेण यज, देवान्। हे 'चिकित्वः' चिकित्वन्! ज्ञानवन्नित्यर्थः। 'अथ' एवम्, 'नः' अस्माकं यागं कुर्वन्, तं शृणु, यं कुरुष्व। 'धाः अध्वरं' धारय यज्ञम्। 'देववीतौ' देवतर्पणायेत्यर्थः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च "द्विता"—इत्ययं द्वैधमित्येवमुपपद्यते॥

"व्राः (२०)—इति, अनवगतम्। "वात्याः"—इत्यवगमः। "गोभिर्यदी मन्ये अस्मन्मृगं न व्रा मृगयन्ते। अभित्सरन्ति धेनुभिः॥"—इति (ऋ० सं० ५, ७, १८, १)। काण्वश्च मेधातिथिः, प्रियमेधाङ्गिरसः ऐन्द्रं सूक्तं ददृशतुः। तत्रैषाभिप्ल-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लितो वा। अस्मभ्यमप्रतिष्कुत इत्यपि निगमो भवति। शाशदानः शाशाद्यमानः। प्र स्वां मतिमतिरच्छाशदान इत्यपि निगमो भवति ॥ ७ (१६) ॥

इति षष्ठाध्यायस्य तृतीयः पादः ॥ ६, ३ ॥

"अग्रिया (६३)"—इति, अनवगतम्। "अग्रगमनेन" अग्रियाः। अग्रमेव अग्रियाः, अनर्थक एवाग्रशब्दे 'या'कार उपबन्ध उपात्तः —"अपि वाग्रमित्येतदनर्थकमुपबन्धमाददीत"—इत्युक्तं भाष्य-कारेण। "अयं वो यज्ञ ऋभवोऽकारि यमा मनुष्वत् प्रदिवो दधिध्वे। प्रवोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥"—इति (ऋ० सं० ३, ७, ३, ३)। वामदेवस्यार्षम्। आर्भवे त्रिष्टुप्। व्यूढस्य दशरात्रस्य पञ्चमेऽहनि तृतीये सवने वैश्वदेवे शस्यते। हे 'ऋभवः!' युष्माकम् 'अयं' 'यज्ञः' 'यम्' अहमाकर्षम्। तमागत्य 'मनुष्वत्' मनुष्यवत्, 'प्रदिवः' प्रकर्षेण द्योतमानाः सन्तः, 'आदधिध्वे' धारयध्वे। एतत् 'वः' प्रब्रवीमि। किञ्च, "प्रवोऽच्छा जजुषाणासो अस्थुः" प्रस्थितानि यान्येतानि हवींषि, तानि यूयं "जोषयमाणाः" देवैः सेव्यमाना वा आत्मना 'अग्रिया' 'अभूत' "अभवत"। 'उत वाजाः' अपि च हे वाजाः! यूयमप्येवमेव भवत। एवम् "अग्रगामिनः अग्रसम्पादिनो वा अग्रमेव वा = अग्रिया" तथार्थोपपत्तेः शब्दसारूप्याच्च ॥

"चनः (६४)—इति, अन्ननाम" "पचता (६५)"—इति, "पचतिः नामीभूतः"—इति भाष्यकारो ब्रवीति। "अद्धीदिन्द्र

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्। प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः॥"—इति (ऋ० सं० ८, ६, २१, ३)। इयमग्नियुतस्य वाग्नियूपस्य वार्षम्। त्रिष्टुप्। ऐन्द्री। 'अद्धि' भक्षय। हे 'इन्द्र!' 'प्रस्थिता' "प्रस्थितानि" 'इमा' "इमानि" "हवींषि" 'चनः' अन्नम्, एतत् हविर्लक्षणम् 'दधिष्व' प्रक्षिप जठरे। 'पचता' पक्वानि इमानि हवींषि, अतएव ब्रवीमि दधिष्वेति। 'उत सोमम्' अपि च सोमं दधिष्व। 'प्रयस्वन्तः' अन्नवन्तो वयं हवींषि कामयमानं 'त्वा' त्वां 'प्रति हर्यामसि' प्रतिहर्यामः, कामयामहे। "सत्याः सन्तु यजमानस्य कामाः" —इत्यभिप्रायेण। 'हवींषि'—इत्यनेन सम्बन्धात् 'पचता'—इत्ये-तदन्नविषयं बहुवचनमुपपद्यते॥ "पचतिर्नामीभूतः"—इति धातु-निर्देशः॥

द्वितीयमुदाहरणं ब्रवीति, अर्थविशेषदर्शनादस्येति,—"तं मेदस्तः प्रति पचताग्रभीष्टाम्"—इति। 'तं' पशुं 'मेदस्तः' यतस्तस्य मेदो वपासहयोगि, ततः, तेन प्रदेशेन 'प्रत्यग्रभीष्टाम्' इन्द्राग्नी 'पचता' पक्वमित्यर्थः॥ एवमेतदेकवचनं भवति॥

"अपि वा" "मेदसश्च" वपासहयोगिनः "पशोः" पश्ववदा-नस्य चाभिधायकमेतत्, "सात्त्वं" सत्त्वविषयं "द्विवचनं स्यात्"। सन्ति ह्येवंरूपाणि द्विवचनान्यपि। तद्यथा,—'दैव्या होतारा भिषजा"

किं कारणमुच्यते "द्विवचनम्" एतत् "स्यात्"—इति? अतः,—यस्मात् "यत्र हि एकवचनार्थः प्रसिद्धम्" एव, निःसन्देह-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मेव "तद् भवति,--'पुरोला अग्ने पचतः'—इति यथा"। "पुरोला अग्ने पचतस्तुभ्यं वा घा परिष्कृतः। तं जुषस्व यविष्ठ्य॥"—इति (ऋ० सं० ३, १, ३१, २)। विश्वामित्रस्यार्षम्। गायत्री। आग्नेयी। आश्विनस्य द्विकपालस्य अतिरात्रे यदि स्विष्टकृद् भवति, तस्येयं पुरोऽनुवाक्या भवति। 'पुरोडाः' पुरोडाशः 'पचतः' पक्व इत्यर्थः। 'तुभ्यं' त्वदर्थम्! भगवन् 'अग्ने!' 'व'-'घ'—इति अनर्थकौ। न केवलं पक्वः, किन्तर्हि? 'परिष्कृतः' सुसंस्कृत इत्यर्थः। तं 'जुषस्व' सेवस्व हे 'यविष्ठ्य' युवतम! अथवा मिश्रयितम!॥ एवमत्र'परिष्कृतः'—इत्येतस्मादेकवचनसम्बन्धात् 'पचतः'—इत्येकवचनमेव सिध्यति॥

"शुरुधः (६६)"—इति, अनवगतम्। "आपो भवन्ति"—इति अभिधेयवचनम्। "शुचं संरुन्धन्ति"—इति निर्वचनम्। "शुग्रुधः"—इति न्याय्यम्। "ऋतस्य हि शुरुधः॥"—इति (ऋ० सं० ३, ६, १०, ३)। दैवते शेषः॥

"अमिनः (६७)"—इति, अनवगतम्। "अमितमात्रः"—इत्यवगमः, न यस्य मात्राणां मानमस्ति, सोऽमिन इत्युच्यते। "अभ्यमितो वा" अनभिहिंसितो यः केनचिदसौ अमिनः। "महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्॥"—इति (ऋ० सं० ४, ६, ७, १)। भरद्वाजस्यार्षम्। त्रिष्टुप्। ऐन्द्रो। दशरात्रस्याष्टमेऽहनि मरुत्वतीये शस्त्रे शस्यते, माहेन्द्रश्च ग्रहोऽनयैव गृह्यते। 'महान्' प्रभावतः, 'नृवत्' मनुष्यवत्, 'आचर्षणिप्राः' आपूरयिता

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'चर्षणीनाम्' मनुष्याणां कामैः, यथा हि मनुष्य ईश्वरः परितुष्टः कामैरवश्यं भृत्यमापूरयति, एवमिन्द्रोऽपि स्तोतारम्। उत द्विबर्हाः' अपि च द्वयोः स्थानयोः मध्यमोत्तमयोः परिवृढः 'अमिनः' च अमितमात्रः, अथवा अनभिहिंसितः केनचित्। केन पुनरमिनः? इति, उच्यते,—'सहोभिः' बलैरित्यर्थः, न हीन्द्रस्य बलमात्राः केनचिन्मितपूर्वा इत्यर्थः, अनभिहिंसितपूर्वो वा केनचिदिन्द्रः। 'अस्मत्' अस्मदनुग्रहाय अस्मद्दर्शनाय 'वावृधे' वर्द्धते। 'वीर्य्याय' वीरकर्मणे वर्षार्थम्' 'उरुः' महान् परिमाणतः, 'पृथुश्च' विस्तीर्णो यः, सोऽस्माकं प्रत्यभिमुखो दानायाभिप्रेतानामर्थानां 'सुकृतः' स्तुतिभिः एतैः 'कर्त्तृभिः' ऋत्विग्भिः 'भूत' भूयादित्यर्थः॥ एवमत्र 'अमिन'शब्देन "अमितमात्रः" अनभिहिंसितमात्रो वा— इत्युच्यते शब्दसारूप्यादर्थोपपत्तेश्च॥

"जज्झतीः (६८)"—इति, अनवगतम्। शब्दानुकरणात् "आपः"—इति प्रतीयन्ते। "आ रुक्मैरायुधा नर ऋष्वा ऋष्टीरसृक्षतः। अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त्तत्मना दिवः॥"—इति (ऋ० सं० ४, ३, ६, ६)! श्यावाश्वस्यार्षम्। मारुती। पङ्क्तिः। 'आ' आभिमुख्येन 'शत्रून्' शातयितव्यान् मेघान् प्रति 'आयुधा' एतान्यायुधानि 'रुक्मैः' विकृतानि, एताश्च 'ऋष्टीः' शक्तीः 'असृक्षत' असृजन्त हे 'नरः' मरुतः! किञ्च, 'अन्वेनान्' प्रहारान् 'विद्युतः' 'भानुः' आदित्यः 'इव' 'त्मना' आत्मना 'दिवः' द्युलोकात् 'अर्त्त' अपगच्छन्तु। मेघेभ्यो हन्यमानेभ्यः तदन्वेव चापोऽपि 'अर्त्त' आगच्छन्तु। कथम्? इति,—

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'जज्झतीः इव' "शब्दकारिण्यः" इव स्रोतस्याः "आपः" 'ऋष्वं' प्रभूता इत्यर्थः ॥ एवमत्र शब्दानुकरणात् "आप = जज्झतीः" इत्युपपद्यते ॥

"अप्रतिष्कुतः (६९)"—इति, अनवगतम्। "अप्रतिष्कृतः, अप्रतिस्खलितः वा"—इति शब्दसमाधी। "स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि। अस्मभ्यमप्रतिष्कुतः ॥"—इति (ऋ० सं० १, १, १४, १)। मधुच्छन्दस आर्षम्। गायत्री। ऐन्द्री। पृष्ठ्याभिप्लवयोः प्रातः सवनिके आवापे विनियुक्ता ब्राह्मणाच्छंशिनः शस्त्रे शस्यते। हे 'वृषन्' इन्द्र! वर्षितः! यः त्वम् अनुग्रहीता 'नः' अस्माकम्, 'सः' त्वं शृणु यत् कुरुष्व। 'अमुंचरुम्' अमुमन्तरिक्षचरणशीलं मेघम्। हे सत्रादावन्' सततदान! 'अपावृधि' अपावृणु, उदकदानार्थमस्मभ्यम्। 'अप्रतिष्कुतः' न हीन्द्रः "प्रतिष्कृतः" परान् प्रति पराङ्मुखः कृतपूर्वः केनचित्, अथवा "अप्रतिस्खलितः" संग्रामेषु ॥ एवमत्र 'अप्रतिष्कुत' शब्दः "अप्रतिष्कृत" वाची अथवा "अप्रतिस्खलित" वाची, तथार्थाविरोधः ॥

"शाशदानः (७०)"—इति, अनवगतम्। "शाशाद्यमानः" —इत्यवगमः। "अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत्। सं वज्रेणासृजद् वृत्रमिन्द्रः प्रस्वां मतिमतिरच्छाशदानः ॥"—इति (ऋ० सं १, ३, ३, ३)। हिरण्यस्तूपस्यार्षम्। गोसवविवधयोर्निष्केवल्ये शस्यते। 'अभि अजिगात्' अभ्यगच्छत्। 'अस्य' इन्द्रस्य स्वभूतः, 'तिग्मः' उत्साहवान्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वज्रः 'शत्रून्' प्रति 'सिध्मः' साधयिता शत्रूणाम्। 'वितिग्मेन' तीक्ष्णेन 'वृषभेण' वर्षप्रवर्त्तकेन। 'पुरः' मेघपुरः असुरपुरो वा 'अभेत्'। किञ्च, समसृजत् वज्रेण वृत्रमिन्द्रः'। स च भिद्यमानः 'प्रातिरत् स्वां मतिं' "न दातव्यमुदकमेषाम्"—इत्येतां मतिं स्वां 'प्रातिरत्' प्राजहादित्यर्थः। 'शाशदानः' पुनः पुनः "शाशाद्यमानः" इन्द्रेण॥ एवमत्र "शाशदानः=शाशाद्यमानः"—इत्युपपद्यते, शब्दसारूप्यादर्थाविरोधाच्चेति॥ ७ (१६)॥

इति निरुक्तवृत्तौ एकादशस्याध्यायस्य (षष्ठाध्यायस्य) तृतीयः पादः॥ ६, ३॥

---

## चतुर्थः पादः।

सृप्रः सर्पणादिदमपीतरत् सृप्रमेतस्मादेव सर्पिर्वा तैलं वा। सृप्रकरस्नमूतय इत्यपि निगमो भवति। करस्नौ बाहू कर्मणां प्रस्नातारौ सुशिप्रमेतेन व्याख्यातम्। वाजे सुशिप्रगोमतीत्यपि निगमो भवति शिप्रेहनू नासिके वा हनुर्हन्तेर्नासिका नसतेः। विष्यस्व शिप्रे विसृजस्व धेने इत्यपि निगमो भवति। धेना दधातेरंसु रमणात्। स चित्रेण चिकितेरंसु भासेत्यपि निगमो भवति। द्विबर्हा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वयोः स्थानयोः परिवृढो मध्यमे च स्थान उत्तमे च। उत द्विबर्हा अमिनः सहोभिरित्यपि निगमो भवत्यक्र आक्रमणात्। अक्रो न बभ्रिः समिथे महीनामित्यपि निगमो भवत्युराण उरु कुर्वाणः। दूत ईयसे प्रदिव उराण इत्यपि निगमो भवति ॥ १ ॥

"सृप्र (७१)" इति, अनवगतम्। 'सर्पः'—इत्यवगमः। "सर्पणात्"—इति निर्वचनम्। "इदम् अपि इतरत् सृप्रम्" "एतस्मादेव" स्यात्, यदेतत् "सर्पिर्वा तैलं वा" तदपि हि सर्पति। "सृप्रकरस्नमतये"—इति (ऋ० सं ६, ३, २, ५)॥ निगमः। वृवदुक्थं हवामहे"—इति व्याख्यातः शेषः॥ "करस्नौ बाहू, कर्मणां प्रस्नातारौ" निर्वर्त्तयितारावित्यर्थः॥

"सुशिप्रः (७२)"—इति, अनवगतम्। तत् पुनः "एतेन" एव सृप्रशब्देन "व्याख्यातम्" सर्पतेरेवैतदपि, "शिप्रे=हनू, नासिके वा" ते यस्य शस्ते, स सुशिप्रः। "वाजे सुशिप्र गोमति"—इति (ऋ० सं० ६, २, २, ३)। निगमः "विद्मा सखित्वम्"—इति व्याख्यातः। नास्मिन् मन्त्रे नासिकयोर्हन्वोर्वा शिप्रशब्दवाच्यत्वे विशेषलिङ्गमस्तीति, अतः "शिप्रे हन नासिके वा"—इत्युक्त्वा विशिष्टतल्लिङ्गमन्यदुदाहरणं ब्रवीति,—"विष्यस्व शिप्रे"—इति। "मादयस्व हरिभिर्ये त इन्द्र विष्यस्व शिप्रे विसृजस्व धेने। आ त्वा सुशिप्र हरयो वहन्तशन् हव्यानि प्रति नो जुषस्व ॥"—इति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

(ऋ० सं० १, ७, १३, ४)। कुत्सस्येयमार्षम्। ऐन्द्री। जगती। दशरात्रस्य नवमेऽहनि मरुत्वतीये शस्त्रे शस्यते। 'मादयस्व' हर्षयस्व 'स्वम्' आत्मानम् हे 'इन्द्र!' 'हरिभिः' अश्वैः, 'ते' तव स्वभूताः, तैः सह। कथं च पुनर्मादयस्व? इति,—'विष्यस्व' विमुञ्चस्व 'शिप्रे' सृप्रे, दीर्घे हनू हविर्भक्षणाय, नासिके वा गन्धाघ्राणाय, एवं मादयस्वात्मानमिति। 'विसृजस्व धेने' आधस्त्ये दंष्ट्रे वा, 'जिह्वोपजिह्विके वा'—इत्येके, तयोर्हि अन्नं धीयते। किञ्च, 'आ त्वा वहन्तु हरयः' हृष्टाः सन्त आवहन्तु त्वां हरयः अस्मान् प्रति। हे 'सुशिप्र!' 'उशन्' कामयमानः 'हव्यानि' हवींषि एतानि अस्मत्प्रत्तानि। स्तुतिभिरस्माभिरासेवितः 'प्रतिजुषस्व नः' प्रतिसंसेवस्व नः कामैरित्यभिप्रायः॥ एवमत्र मेदनसम्बन्धात्, हविःसम्प्रदानसम्बन्धाच्च "शिप्रे=हनू नासिके वा"—इत्यु पपद्यते॥

यत्तदुक्तम्,—"शिप्रे इत्यु परिष्टाद् व्याख्यास्याम"—इति, एतद् व्याख्यातम्,—"शिप्रे=हनू नासिके वा"—इति॥

"हनुः, हन्तेः (अदा० प०)" धातोः। "नासिका, नसतेः" "नसतिराप्नोतिकर्मा वा नमतिकर्मा वा"—इति हि वक्ष्यति॥

"रंसु (७३)"—इति, अनवगतम्। 'रमणीयेषु'—इत्यवगमः। "रमणात्"—इति निर्वचनम्। "आयन्मे अश्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्। स चित्रेण चिकिते रंसु भासा जुजुर्वान् यो मुहुरा युवाभूत्॥"—इति (ऋ० सं० २, ५, २४; ५)। सोमाहुतेर्भार्गवस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शस्यते। 'आ पनन्त' आभिमुख्येन पनन्त, अस्तुवत। 'मे' मम स्वभूतेकर्मणि। 'अभ्वं' महान्तम् अग्निम्, 'वनदः' वननीयस्य हविषो दातारः ऋत्विजः यं 'वर्णः' वरं वृण्वन्ति अस्मदर्थम्, तेभ्यः 'उशिग्भ्यः' मेधाविभ्यः। तमसौ वरणं प्रार्थनां 'न अमिमीत' न हिनस्ति। किन्तर्हि? यथाप्रार्थितमेव समर्द्धयतीत्यर्थः। किञ्च, 'सः' अग्निः 'चित्रेण' चायनीयेन भासा युक्तः 'रंसु' रमणीयेषु स्थानेषु द्युलोकादिषु अग्निहोत्रेषु वा 'चिकिते'। किंलक्षणः 'यः' अग्निः? इति,—'जुजुर्वान्' पुनः पुनः जरावान् अपि भूत्वा, 'मुहुरा युवा भूत्', इन्धनक्षयात् पुनरिन्धनं प्राप्य तस्योपरि दीप्यमानो मुहुर्मुहुः युवेव भवति॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'रंसु'—इत्यस्य 'रमणीयेषु'—इति विपरिणाम उपपद्यते॥

"द्विबर्हाः (७४)"—इति, अनवगतम्। 'द्विपरिवृढः'—इति न्याय्यम्। मध्यमे च स्थाने वैद्युतात्मना, उत्तमे च सूर्य्यात्मना। "उत द्विबर्हाः"—इति (ऋ० सं० ४, ६, ७, १)। निगमः। "महाँ इन्द्रः"—इति व्याख्यातः शेषः॥,

"अक्रः (७५)"—इति, अनवगतम्। 'आक्रमणः,—इति न्याय्यम्। "आक्रमणात्"—इति निर्वचनम्। प्राकारोऽभिधेयः। "अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः। उदुस्त्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः"—इति (ऋ० सं० २, ८, १५, २)। विश्वामित्रस्यार्षम्। त्रिष्टुप्। आग्नेयी प्रातरनुवाकाश्विनयोः शस्यते। 'अक्रो न' अक्र इव, प्राकार इव।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'बभ्रिः' भर्त्ता, धारयिता क्व ? 'समिथे' संग्रामे। कस्य ? 'महीनां' महतीनां शत्रुसेनानाम्। एवंलक्षणो योऽग्निः। किञ्च, 'दिदृक्षेयः' दृश्यते यः। 'सूनवे' सोमाभिषवकर्त्त्रे यजमानाय नित्यकालमेव। 'भ्राजीकः' प्रसिद्धभाः' प्रसिद्धदीप्तिः' नित्यो ज्वलित इत्यर्थः। किञ्च, सर्वस्य लोकस्य 'जनिता' जनयिता। 'उस्रिया उज्जजान' उस्रिया आहुतिः आत्मनि प्रक्षिप्ताः सतीः देवतातृप्तिसमर्थेन रूपेण ऊर्ध्वाः 'यः' जनयति। अथवा गाव एव वोस्रियाः स्युः, ता अपि ह्यसौ पशुकामकर्मणि अङ्गभावं गच्छन् जनयति। यश्च 'अपां गर्भः' यश्च 'नृतमः' मनुष्यतमः' यश्च 'यह्वः' महान्, 'अग्निः' स इदं नामास्माकं करोत्विति॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "अकः = प्राकारः"—इत्युपपद्यते, असौ हि आक्रम्यते जनैः॥

"उराणः (७६)"—इति, अनवगतम्। "उरु कुर्वाणः"—इत्यवगमः। "वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी सञ्चिकित्वान्। दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि॥"—इति (ऋ० सं० ३, ५, ७, ३)। वामदेवस्यार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्नग्ने! 'वेः' त्वं जानीषे। किम् ? 'अध्वरस्य' यज्ञस्य 'दूत्यानि' दूतकर्माणि, यानि दूतेन कर्त्तव्यानि। किञ्च, 'उभे अन्ता' उभावप्यन्तौ 'रोदसी' रोदस्योः 'विद्वान्' असि विजानिषे। किञ्च, समस्तमप्येतज्जगत् 'चिकित्वान्' असि, न ते विज्ञानप्रतीघातोऽस्ति कृत्स्नेऽपि जगति, विजानीषे सर्वाणि देवतास्थानानि।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'प्रदिवः' एव असि 'दूतः' चिरन्तनः सर्वेषां यजमानानाम्। यतोऽस्माभिस्त्वमेतस्मिन् कर्मणि 'दूतः' दूतत्वेन 'ईयसे' याच्यसे, स त्वम् 'उराणः' अल्पमपि हुतं हविः देवतातृप्तिसमर्थं बहु कुर्वाणः। 'विदुष्टरः' विद्वत्तरः, मनुष्यहोतुः सकाशात्। 'दिव आरोधनानि' आरोढव्यानि देवतास्थानानि प्रति वह एतानि हवींषीत्यभिप्रायः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'उराणः'—इत्यस्य "उरु कुर्वाणः"—इत्येष विपरिणाम उपपद्यते॥ १॥

स्तिया आपो भवन्ति स्त्यायनात्। वृषा सिन्धूनां वृषभः स्तियानामित्यपि निगमो भवति। स्तिपा स्तियापालन उपस्थितान् पालयतीति वा। स न स्तिपा उत भवा तनूपा इत्यपि निगमो भवति॥ जबारु जवमानरोहि जरमाणरोहि गरमाणरोहीति वा। अग्रे रुप आरुपितं जबारु इत्यपि निगमो भवति। जरूथं गरूथं गृणातेः जरूथं हन्यक्षिराये पुरन्धिमित्यपि निगमो भवति। कुलिश इति वज्रनाम कूलशातनो भवति। स्कन्धाꣳसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः। स्कन्धो वृक्षस्य समास्कन्नो भवत्ययमपीतरस्कन्ध एतस्मादेवास्कन्नं कायेऽहिः शयत उपपर्चनः। पृथिव्यास्तुञ्जस्तुञ्जतेर्दानकर्मणः॥२ (१७)॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"स्तियाः (७७)"—इति, अनवगतम्। 'स्त्यायजाः' - इति न्याय्यम्। "आपो भवन्ति"—इत्यभिधेयवचनम्। "स्त्यायनात्" संहननात् इत्यर्थः, आप एव हि पार्थिवानामवयवानां संहनने हेतुभूता भवन्ति, अथवा हिमप्रभावेण च ता आत्मनैव संहता भवन्ति। "वृषासि दिवो वृषभः पृथिव्या वृषा सिन्धूनां वृषभः स्तियानाम्। वृष्णे त इन्दुर्वृषभः पीपाय स्वादू रसो मधुपेयो वराय॥"—इति (ऋ० सं० ४, ७, २०, १)। शंयोर्बार्हस्पत्येयमार्षम्। ऐन्द्री। हे इन्द्र! 'वृषा असि' वर्षितासि 'दिवः' 'पृथिव्याः' च वर्षिता। 'सिन्धूनां' स्यन्दमानाम् अपाञ्च वर्षिता। 'स्तियानां' संहन्त्रीणाम् अपाम्, अथवा संहतानामात्मनैव हिमप्रभावेण। यावत् किञ्चित् सेचकर्म, तत् सर्वं त्वदधीनमित्यभिप्रायः। तस्मै ते एवंगुणविशिष्टाय'वृष्णे' वर्षित्रे 'ते' तुभ्यम्। एषः 'इन्दुः' सोमः, हे 'वृषभ' वर्षितः! 'पीपाय' पुनः पुनः आप्यायते, अथवा पानाय संस्कृतः, 'स्वादू रसः' स्वादुरससंयुक्तः, मधुपेयः' मधुरपेयः, 'वराय' तुभ्यं श्रेष्ठायेत्यर्थः॥ एवमत्र 'स्तिया'शब्देन 'संहन्त्र्यः, संहता वा आपः' उच्यन्ते, शब्दसारूप्यात् "स्त्यै शब्दसङ्घातयोः (भू० प०)"—इत्यस्य॥

"स्तिपाः (७८)"—इति, अनवगतम्। "स्तियापालनः"—इत्यवगमः। 'कूपः' अभिप्रेयः, स हि "उपस्थितान्" पातॄन् "पालयति"। "यं त्वा पूर्वमीडितो वध्र्यश्वः समीधे अग्ने स इदं जुषस्व। स नः स्तिपा उत भवा तनूपा दात्रं रक्षस्व यदिदं ते अस्मे॥"—इति (ऋ० सं० ८, २, १९, ४)। वाध्र्यश्वस्य सुमित्र-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्येयमार्षम्। त्रिष्टुप्। आग्नेयी। 'हे अग्ने!' 'यं त्वां' वध्र्यश्वः 'ईडितः' अपि सर्वैर्महर्षिभिः; 'पूर्वं' 'समीधे' समेधितवान्, उपचीर्णवान्, तं त्वामहमपि समिन्धे, को हि नाम त्वां न समिन्ध्यात्। 'सः' त्वमिध्यमानः अस्माभिः 'इदं' हविः 'जुषस्व' संसेवस्व। किञ्च, य एवमस्माभिः ईड्यसे त्वम्, 'सः' 'नः' 'स्तिपाः' कूप इव 'तनूपाः' भव, कूपो हि तृष्णयार्त्तान् पातॄन् पात्युदकसम्प्रदानेन। किञ्च, 'दात्रम्' दानम् 'रक्षस्व'। कतमत्? 'यदिदं ते' 'अस्मे' अस्मासु वर्त्तते इत्यर्थः॥ एवमत्राविरोधाच्छन्दसारूप्याच्च "स्तिपाः = कूपः"—इत्युपपद्यते॥

"जवारु (७६)—इति, अनवगतम्। "जवमानरोहि"—इत्येवमाद्याः शब्दसमाधयः। "त मिन् न्वे ३ व समाना समानमभि क्त्वा पुनती धीतिरश्याः। ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरूपितं जवारु॥" इति-(ऋ० सं० ३, ५, २, २)। वामदेवस्यार्षम्। "वैश्वानराय मीळ्हुषे सजोषाः"—इत्येतस्मिन् वैश्वानरीये सूक्ते। 'तम्' एव हे यजमान! त्वम् 'अभ्यश्याः' प्राप्नुयाः वैश्वानरं सूर्य्यम्'। 'समाना' समानयैव, तदनुरूपयैव अस्तुत्या 'समानम्'। केन पुनरभ्यश्याः? 'क्त्वा पुनती' स्वात्मपवनसमर्थेन कर्मणा प्रज्ञानेन वा। किंलक्षणः पुनर्यो वैश्वानरः तमभ्यश्याः? 'ससस्य पृश्नेः' स्वपनस्य द्युलोकस्य 'पृश्नेः' प्राष्टवर्णस्य 'अधि' उपरि, स्वपन्तीव हि द्युलोको निश्चलत्वात्। 'चर्मन्' चरणार्थम्। कथं नाम सौर्य्येण प्रकाशेन जनाश्चरेयुरित्यनेनाभिप्रायेण। 'चारु' दीप्तिमत्। 'अग्रे' पूर्वसर्गादौ 'रुपः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

आरुपितम्' 'रिपः'—इति विपरिणामः, भूम्या इत्यर्थः, 'आरुपितम्' आरोपितं देवैः, 'जबारु' मण्डलं यस्य। तं त्वमभ्यश्याः। इह वा आदित्य आसीत्, तमाभ्यां परिगृह्योपरिष्टात् नास्तां प्रजानां न्यदधुरिति विज्ञायते॥ एवमत्र "जबारु=आदित्यमण्डलम्" उच्यते, तद्धि जवमानं गच्छन् नभसो मध्यमारोहति, जायते वा उदेतीत्यर्थः, जवमानमेव हि तत्र तत्रोदेति। "जरमाणरोहि" वा स्यात्, तद्धि जरमाणं सर्वभूतानि रोहति। "गरमाणरोहि वा" तद्धि गरमाणं रसानारोहति॥

"जरूथम् (८०)"—इति, अनवगतम्। "गरूथम्"—इत्यवगमः। "गृणातेः (क्र्या० प०)"—इति धातुनिर्देशः। "त्वामग्ने समिधानो वसिष्ठो जरूथं हन् यक्षि राये पुरन्धिम्। पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः॥"—इति (ऋ० सं० ५, २, १२, ६)। वसिष्ठस्यार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन् 'अग्ने!' 'वसिष्ठः' 'त्वां' 'समिधानः' सन्दीपयन् 'जरूथं' स्तोत्रं 'हन्' गमयन् त्वां प्रति, "हन्ति, सेधति"—इति गतिकर्मसु पठितम्। 'यक्षि' यजति। 'राये' धनप्राप्त्यर्थम्। 'पुरन्धिम्' वहुकर्मतमं धनसम्बन्धाद्वा वहुदातृतममिति स्यात्। यस्त्वं वसिष्ठेन एवमिज्यसे, तं त्वां वयमपि यजाम एव। सत्वं 'पुरुणीथा' वहुस्तुत! 'जातवेदः' अस्माभिरिज्यमानः 'जरस्व' जुषस्वैतद्धविः अस्मत्प्रत्तम्। किञ्च, 'यूयम्' अस्मान् 'पात' रक्षत। एकस्यैव पूजनार्थे वहुवचनम्। 'स्वस्तिभिः' स्वस्त्ययनैः, आशीःप्रयोगैः पात 'नः'। 'सदा'

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नित्यमेवेत्यर्थः। एवमत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च "जरूथम्=स्तोत्रम्" उपपद्यते ॥

"कुलिशम् (८१)"—इति, अनवगतम्। "वज्रनाम"—इत्यभिधेयवचनम्। "कूलशातनः" इति शब्दसमाधिः। "अहन् वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन। स्कन्धांसीव०–० पृथिव्याः ॥"—इति (ऋ० सं० १, २, ३६, ५)। ऐन्द्री। त्रिष्टुप्। हिरण्यस्तूपस्यार्षम्। अग्निष्टोमे निष्केवल्ये शस्यते। 'अहन्' हतवान्, हन्ति वा इन्द्रः 'वृत्रं' मेघम्। 'वृत्रतरम्'—इति तस्यैव वा विशेषणम्, अन्यो वा वृत्रतरो यः तमपि हन्ति। कथं पुनर्हन्ति? इति,—'व्यंसम्' विच्छिन्नसन्धिबन्धनं कृत्वा। केन पुनर्हन्ति? इति,—'वज्रेण महता' प्रहारेण। किञ्च, स्कन्धांसि इव' वृक्षशाखा इव, कुलिशेन' "कूलशातनेन वज्रेण" 'विवृक्णा' विवृक्णानि। स एवम् 'अहिः' अगमनो मेघः, छिद्यमानोऽस्याः पृथिव्याः 'उपपृक्' "उपपर्चनः" सम्पर्कस्य कर्त्ता भूत्वोदकभावेन, अस्यामेव पृथिव्याम् 'अहिः' 'शयते' अगमयत्। अवस्थानमात्रमेव स्वप्नोऽभिमतः ॥ एवमत्र वधसम्बन्धात् "कुलिशः=वज्रः"—इत्युपपद्यते ॥

"तुञ्जे (८२)"—इति, अनवगतम्। "तुञ्जतेः" दानार्थस्येति निर्वचनम्। 'तुञ्जनम्'—इति स्यात् ॥ २ (१७) ॥

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम् ॥ दाने दाने य उत्तरे स्तोमा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेर्बर्हणा परिबर्हणा। बृहच्छ्रवा असुरो बर्हणा कृत इत्यपि निगमो भवति ॥ ३ (१८) ॥

"तुञ्जे तुञ्जे०—०सुष्टुतिम्"—इति (ऋ० सं० १, १, १४, २)। मधुच्छन्दस आर्षम्। ऐन्द्री। गायत्री। प्रातःसवने ब्राह्मणाच्छंसिनः आवापे विनियुक्ता। 'तुञ्जे तुञ्जे' "दाने दाने" 'ये' 'उत्तरे' उत्तरोत्तरे दानपरितुष्टेन मया 'स्तोमाः' 'इन्द्रस्य वज्रिणः' चिन्त्यन्ते,—एतैः स्तोमैरसौ योग्यः स्तोतुमिति। किं तेषाम्? 'न 'विन्धे' न 'अस्य' सर्वैरपि "तैर्विन्दामि" "सुष्टुतिं समाप्तिं स्तुतेः" इत्यर्थः। यावत्य एव स्तुतय उपादीयन्ते' ताः सर्वा एवेन्द्रं प्राप्य न्यूना भवन्तीत्यभिप्रायः॥ एवमत्र स्तोमसम्बन्धात् 'तुञ्ज' शब्दो दानपर्य्यायवचनः' तुञ्जतेश्च दानार्थस्य दर्शनात् ॥

"बर्हणा (८३)"—इति अनवगतम्। "परिबर्हणा"—इत्युपसर्गाध्याहारेणार्थप्रतीतिः। परिबर्हणा = परिवृद्धिः, परिहिंसा वा। "अर्चा दिवे बृहते शुष्यं१ वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः। बृहच्छ्र वा असु रो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः॥"—इति (ऋ० सं० १, ४, १७, ३)। सव्यत्वमापन्नस्यास्येन्द्रस्यार्षम्। जगती। ऐन्द्री। चतुर्थे पादे 'रथः' हि, सः"—इति पदानि। हे स्तोतः! 'अर्च' प्रोच्चारय इन्द्राय 'दिवे' द्योतनवते 'बृहते' च महते, 'शुष्यं' धनसंयुक्तं बलकृतिसंयुक्तं वा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वचः। किंलक्षणायेन्द्राय अर्च ? 'इति,—'स्वक्षत्रं यस्य' स्वमेव क्षत्रं धनं बलं वा यस्य', न कदाचिदपि यः परकीयमाकाङ्क्षतीत्यभिप्रायः। किञ्च, यस्य 'धृषतः' धर्षयतः' शत्रून् 'धृषत्' एव धृष्ट 'मनः' भवति, तदर्थमर्चेति। किञ्च, येनेन्द्रेण 'बृहच्छ्रवाः' बृहद्घोषः' 'असुरः' मेघो वा। 'बर्हणा' परिवृद्धया परिवृद्धेन वधेन परिहिंसया वा 'पुरः' अर्वाक् 'हरिभ्यां' प्राप्तेनैव तावदश्वौ हरी रथे युक्तौ तमसुरं प्राप्नुतः। अथेन्द्रेण शीघ्रास्त्रत्वाद्दूरपातित्वाच्च 'वृषभः' वर्षिता 'कृतः'। अथच तावत् 'रथोहि सः' रंहणो हि शीघ्रः स मेघः। तथाहि,—येनेन्द्रेण पुरैव हरिभ्यां प्राप्तेः प्रहारैर्जर्जरीकृत्य वर्षिता कृतो मेघः, तमभ्यर्च॥ एवमत्र शब्दसारूप्यादसुरसम्बन्धाच्च "बर्हणा=परिबर्हणा"—इत्युपपद्यते ॥ ३ (१८) ॥

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह। अपाप शक्रस्ततनुष्टि मूहति तनूशुभ्रं मघवा यः कवासखः ॥ घ्रंस इत्यहर्नाम ग्रस्यन्तेऽस्मिन्नसा गोरूध उद्धततरं भवत्युपोन्नद्धमिति वा स्नेहानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते स योऽस्मा अहन्यपि वा रात्रौ सोमं सुनोति भवति भवति ह द्योतनवानपोहत्यपोहति शक्रस्ततनिषुं धर्मसन्तानादपेतमलङ्करिष्णुमयज्वानं तनूशुभ्रं तनूशोभयितारं मघवा यः कवासखो

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

यस्य कपूयाः सखायः। न्याविध्यदिलीबिशस्य दृढा विशृङ्गिणमभिनच्छुष्णमिन्द्रः। निरविध्यदिलाबिलशयस्य दृढानि व्यभिनच्छृङ्गिणं शुष्णमिन्द्रः॥ ४ (१९)॥

"ततनुष्टिः (८४)"—इति, अनवगतम्। "तितनिषुः"—अयं स्यात्। "यो अस्मै घ्रंस०—०कवासखः"—इति (ऋ० सं० ४, २, ३, ३)। प्राजापत्यस्य संवरणस्यार्षम्। ऐन्द्री। जगती। 'यः' 'अस्मै' इन्द्राय 'घ्रंसे' "अहनि" 'उत वा' "अपि वा" 'यः' 'ऊधनि' "रात्रौ" 'सोमं' 'सुनोति' अभिषुणोति' नित्यकालमेव यः सोमाभिषवे प्रयतते इत्यर्थः। तस्य किम्? इति,—स एव निश्चयेन 'द्युमान्' "द्योतनवान्" 'भवति'। अथ पुनः इतो यो विपरीतो भवति, पूर्वैश्च पूर्वतनैश्च "धर्मसन्तानात्" अनुष्ठितात् "अपेतम्" तमलं कर्मभिरित्येवंवादिनम् "अलङ्करिष्णुम्" "अयज्वानम्" अयजनशीलम्, आत्ममण्डनपरं वा, विषयोपभोगपरतया स्ववित्तं "तितनिषुम्" अनेकैः प्रकारैः यो वित्तानि तनितुमिच्छति, तम्, अश्रद्दधानम् धर्मे। 'शक्रः' शक्तः इन्द्रः, "अप ऊहति—अप ऊहति"—उपसर्गाभ्यासदर्शनात् ऊहतेरप्यभ्यास आदरार्थं कृतः, पुनः पुनरपोहति नाशयतीत्यर्थः। 'तनूशुभ्रम्' "शरीरशोभयितारम्" ततनुष्टेरेवैतद् विशेषणम्। यश्च अन्योऽपि 'कवासखः' कपूयसखो भवति, तमप्यपोहति। 'मघवा' धनस्वामी इन्द्रः, अवश्यम्भावी तस्य हि विनाश इत्यभिप्रायः॥ केचित्तु 'कवा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सख' शब्दं 'तनूशुभ्रं' विशेषणमेव वर्णयन्ति॥ इतरो विषय-प्रधानोऽपि भूत्वा साधुसम्पर्कात् कदाचित् प्रपद्येत, इतरस्त्व-साधुसम्पर्कादत्यन्तनष्ट एवेत्यनेनाभिप्रायेण ॥ एवमत्र 'ततनुष्टि' शब्देन 'विषयोपभोगप्रधानः' उच्यते, शब्दार्थाविरोधादित्यु-पपत्तिः ॥

"ध्रंसः—इति अहर्नाम" "ध्रस्यन्तेऽस्मिन् रसाः" सूर्य्येण। "गोः 'ऊधः' उद्धततरम्"—इति शब्दसारूप्यप्रसक्तम्, तद्धि अन्येभ्योऽङ्गेभ्य उद्धततरं "भवति" "उपोन्नद्धम्—इति वा" तद्धि विज्ञायते केनचिदुपश्लिष्य गोरुदरे नद्धमिति। "स्नेहा-नुप्रदानसामान्यात् रात्रिरप्यूध उच्यते" सापि ह्यवश्यायानो-षधिवनस्पतिस्नेहकान् दधाति ॥

"इलीबिशस्य (८५)"—इति, एतदेकपदमनवगतम्। "इला-विलशयस्य"—इत्यवगमः। 'मेघः' अभिधेयः, स हि इलाहेतो-रुदकस्य आत्मीयानी निर्गमनविलानि संरुध्य शेते, तस्यैव वा बिलेषु इलाहेतुरुदकं शेते इति इलीबिशः। "न्याविध्य०—० मिन्द्रः। यावत्तरो मघवन् यावदोजो वज्रेण शत्रु मवधीः पृतन्युम् ॥"—इति (ऋ० सं० १, ३, ३, २)। हिरण्यस्तूपस्यार्षम्। ऐन्द्री। त्रिष्टुप्। गोसवविवधयोर्निष्केवल्ये शस्यते। 'न्यावि-ध्यत्' "निरविध्यत्" निरताडयत्, इलीविशस्य' "इलाबिल-शयस्य" मेघस्य 'दृढा' "दृढानि" दुर्भेद्यानि उदकसंरोधक्षमाणि स्थानानि। न च केवलमेतावदेव, किन्तर्हि ? 'विश्टङ्गिणम् अभि-नत्' श्टङ्गिणं शिखरवन्तं दीप्तिमन्तं वा विद्युद्भिः, 'शूष्णं' बलवन्तं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मेघम्, 'इन्द्रः' एवं स्तूयमानः प्रत्यक्षीभूतः। प्रत्यक्षकृतः उत्तरोऽर्द्धर्चः। हे 'मघवन्! 'यावत्तरः' यावद्बलमेतस्मिन् मेघेऽस्ति तावदेनं जहि। 'यावत्' च तव व्यथनसमर्थम् 'ओजः' बलमस्ति, या ते शक्तिः, तयैनं 'वज्रेण' 'शत्रुं' शातयितव्यम् 'अवधीः' जहीत्यर्थः। 'पृतन्युम्' पृतनामिच्छन्तम्॥ एवमत्र "इलीविशः=मेघः" शब्दसारूप्यादर्थाविरोधाच्च॥ ४ (१९)॥

अस्मा इदु प्रभरा तूतुजानो वृत्राय वज्रमीशानः क्रियेधाः। गोर्न पर्व विरदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै॥ अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः क्रियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां चरणाय भूमिर्भ्राम्यतेः। भूमिरस्यृषिकृन्मर्त्यानामित्यपि निगमो भवति। विष्पितो विप्रासः। पारन्नो अस्य विष्पितस्य पर्षन्नित्यपि निगमो भवति॥ ५ (२०)॥

"क्रियेधाः (८६)"—इति, अनवगतम्। "कियद्धाः" "क्रममाणधा वा"—इत्यवगमः। कियदप्युदकमपरिमाणं धारयतीति कियद्धा मेघः। क्रममाणो वा धारयतीति क्रममाणधा मेघ एव॥ "अस्मा इदु प्रभरा ०—० चरध्यै"—इति (ऋ० सं० १, ४, २६, २)। नोधा नाम गौतमः, तस्येयमार्षम्। त्रिष्टुप। ऐन्द्री। आहीनिकेष्वहःसु अहीनसूक्ते विनि-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

युक्ता। हे इन्द्र! एष वृत्रः, 'कियेधाः' "कियद्धाः" कियदप्युदकमपरिमाणं धारयति, क्रममाणो वा धारयति। 'अस्मै' त्वं 'तूतुजानः' "त्वरमाणः" 'वज्र' 'प्रभर'। 'ईशानः' ईश्वरो यस्मात् त्वमस्माकं तस्मादेवमुच्यते। किञ्च, प्रहृत्य वज्रं वज्रप्रहारसम्मूढस्यास्य मेघस्य 'गोर्न पर्व' गोरिव पर्वाणि 'विरद' विदारय, यथा गोविकर्त्ता गोः पर्वाणि 'विरदेत्' विच्छिन्द्यात्। एवं त्वमप्येतं मेघमवयवशः 'विरद' विच्छिन्धि। कथञ्च पुनर्विरद? इति,—'तिरश्चा' वज्रेण तिर्यग्गामिना। केन पुनरर्थेन विरद? इति—'इष्यन् अर्णांसि' उदकानीच्छन्। 'चरध्यै' "चरणाय" 'अपाम्' प्रजाभ्यो दातुम्। एवमस्माद् द्विशकलीकृतादापो निश्चरिष्यन्तीत्यनेनार्थेन विरद॥ एवमत्र "कियेधाः=मेघः" शब्दसारूप्यादर्थाविरोधाच्च॥

"कियेधाः=इन्द्रः"—इत्येवमेके मन्यन्ते, स हि यदपि न ज्ञायते कियत्परिमाणमेतद् बलमिति, तदपि धारयति, क्रममाणो वा शत्रुबलं धारयतीति कियेधाः। एवं सति इयं योजना,—यस्मादीशानस्त्वं कियेधाश्च, तस्मात् प्रहर वज्रमिति॥

"भृमिः (८७)—इति, अनवगतम्। 'भ्रमणम्' - इत्यवगमः। "भ्राम्यतेः"—इति निर्वचनम्। 'अग्निः'—अभिधेयः॥ "इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात्। आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम्॥"—इति (ऋ० सं० १, २, ३५, १)। हिरण्यस्तूपस्यार्षम्। प्रातरनुवाकाश्विनयोः शस्यते। हे भगवन्! 'अग्ने!' 'इमां शरणिं' मरणलक्षणां हिंसाम्,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इमां संसृतिं वा 'मीमृषः नः' मार्जयस्व नाशयस्व नः ॥ कतमां शरणिम् ? 'इमम् अध्वानम्' 'यम्' एतं संसाराध्वानम् 'अगाम' गतवन्तो वयम्, अमुष्माल्लोकादिमं लोकम्। अस्मासु एतां संसारहिंसाम्, एतां वा संसारसृतिम्, एनम् आर्जवं जवीभवन्तमस्माकं मार्जय त्वम्। कस्मात् पुनरेवमुच्यसे ? इतः,—यस्मात् 'आपिः' त्वमस्माकं प्राप्तः, अथवा व्यापयिता कृत्स्नस्य जगतो महिम्ना। 'पिता' च रक्षिता, 'सोम्यानाम्' सोमसम्पादिनां मनुष्याणाम्। 'प्रमतिः' च प्रकृष्टमतिः। 'भृमिः' च, त्वमेव संसारे भ्रामयिता पञ्चाग्निविद्योक्तेन प्रक्रमेण, त्वदधीन एव संसारो मोक्षश्च। 'ऋषिकृत्' च, दर्शनकर्त्तासि त्वम्, त्वदधीनमेव दर्शनं 'मर्त्यानां' मनुष्याणाम्। सर्वविज्ञानप्रकाशेनानुगृह्यास्मान् मोचयस्वास्मात् संसारादित्यभिप्रायः। देवयानेनैव पथा गमय, मा पितृयानेनेति॥ एवमत्र "भृमिः=अग्निः" अर्थाविरोधात् विशेष्यते॥

"विष्पितः (८८)"—इति, अनवगम्। "विप्राप्तः"—इत्यवगमः। विस्तीर्ण इतश्चेतश्च, सर्वतो यः प्राप्तः, स विष्पितः। "इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति। प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन्॥"—इति (ऋ० सं० ५, ५, २, १)। "यदद्य सूर्य्य ब्रवोऽनगाः"—इत्येतस्मिन् सूक्ते, अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकः,—अन्याः सर्वा मैत्रावरुण्य इति। 'इमे'—इति द्वयोरेव मित्रावरुणयोः पूजार्थे बहुवचनम्। अर्य्यमा वा तृतीयः स्यात्, अवावपि हि अस्मिन् सूक्ते श्रूयते। शौनकाभिप्रायस्त्वेवं सति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परीक्ष्यः। 'इमे' मित्रावरुणार्य्यमाणः 'दिवः' एत्य 'अनिमिषाः' आद्रवन्तः 'पृथिव्याः' पृथिवीलोकादित्यर्थः। 'चिकित्वांसः' सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः, 'अचेतसम्' अचेतयमानं प्राणिनं कर्मानुरूपेण अमुं लोकं 'नयन्ति'। यत एवमतस्तानहं ब्रवीमि:—'प्रव्राजे' प्रकृष्टे एतस्मिन् व्रजने मरणाख्ये मृत्युकाले उपस्थिते, यदि 'गाधं' संसारगाहनसमर्थं कर्म, विज्ञानं वा 'अस्ति नः' अस्त्यस्माकम्, इतः 'अस्य' 'विष्पितस्य' "विप्राप्तस्य" संसाराध्वनो नद्या इव 'पारं पर्षन्' पारं यन्त्वित्यर्थः॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "विष्पितः = विप्राप्तः" संसाराध्वा— इत्युपपद्यते॥ ५ (२०)॥

तन्नस्तुरीपमद्भुतं पुरुवारं पुरुत्मना। त्वष्टा पोषाय विष्यतु राये नाभानो अस्मयुः॥ तन्नस्तूर्णापि महत्सम्भृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्वित्यस्मयुरस्मान् कामयमानो राऽस्पिनो रास्पी रपतेर्वा रसतेर्वा रास्पिनस्यायोरित्यपि निगमो भवत्यृञ्जतिः प्रसाधनकर्मा आ व ऋञ्जसे ऊर्जां व्युष्टिष्वित्यपि निगमो भवति ऋजुरित्यप्यस्य भवति। ऋजुनीती नो वरुण इत्यपि निगमो भवति। प्रतद्वसू प्राप्तवसू। हरी इन्द्र प्रतद्वसू अभि स्वरेत्यपि निगमो भवति॥ ६ (२१)॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इमां संसृतिं वा 'मीमृषः नः' मार्जयस्व नाशयस्व नः ॥ कतमां शरणिम् ? 'इमम् अध्वानम्' 'यम्' एतं संसाराध्वानम् 'अगाम' गतवन्तो वयम्, अमुष्माल्लोकादिमं लोकम्। अस्मासु एतां संसारहिंसाम्, एतां वा संसारसृतिम्, एनम् आर्जवं जवीभवन्तमस्माकं मार्जय त्वम्। कस्मात् पुनरेवमुच्यसे ? इतः,—यस्मात् 'आपिः' त्वमस्माकं प्राप्तः, अथवा व्यापयिता कृत्स्नस्य जगतो महिम्ना। 'पिता' च रक्षिता, 'सोम्यानाम्' सोमसम्पादिनां मनुष्याणाम्। 'प्रमतिः' च प्रकृष्टमतिः। 'भृमिः' च, त्वमेव संसारे भ्रामयिता पञ्चाग्निविद्योक्तेन प्रक्रमेण, त्वदधीन एव संसारो मोक्षश्च। 'ऋषिकृत्' च, दर्शनकर्त्तासि त्वम्, त्वदधीनमेव दर्शनं 'मर्त्यानां' मनुष्याणाम्। सर्वविज्ञानप्रकाशेनानुगृह्यास्मान् मोचयस्वास्मात् संसारादित्यभिप्रायः। देवयानेनैव पथा गमय, मा पितृयानेनेति ॥ एवमत्र "भृमिः=अग्निः" अर्थाविरोधात् विशेष्यते ॥

"विष्पितः (८८)"—इति, अनवगम्। "विप्राप्तः"—इत्यवगमः। विस्तीर्ण इतश्चेतश्च, सर्वतो यः प्राप्तः, स विष्पितः। "इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति। प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥"—इति (ऋ० सं० ५, ५, २, १)। "यद्य सूर्य्य ब्रवोऽनगाः"—इत्येतस्मिन् सूक्ते, अस्य पुनः सूक्तस्य प्रथमा सौरीति प्रतिजज्ञे शौनकः,—अन्याः सर्वा मैत्रावरुण्य इति। 'इमे'—इति द्वयोरेव मित्रावरुणयोः पूजार्थं बहुवचनम्। अर्य्यमा वा तृतीयः स्यात्, अवावपि हि अस्मिन् सूक्ते श्रूयते। शौनकाभिप्रायस्त्वेवं सति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

परीक्ष्यः । 'इमे' मित्रावरुणार्यमाणः 'दिवः' एत्य 'अनिमिषाः' आदरवन्तः 'पृथिव्याः' पृथिवीलोकादित्यर्थ । 'चिकित्वांसः' सुकृतदुष्कृतानि कर्माणि प्राणिनां जानन्तः, 'अचेतसम्' अचेतयमानं प्राणिनं कर्मानुरूपेण अमुं लोकं 'नयन्ति' । यत एवमतस्तानहं ब्रवीमि:—'प्रव्राजे' प्रकृष्टे एतस्मिन् व्रजने मरणाख्ये मृत्युकाले उपस्थिते, यदि 'गाधं' संसारगाहनसमर्थं कर्म, विज्ञानं वा 'अस्ति नः' अस्त्यस्माकम्, इतः 'अस्य' 'विष्पितस्य' "विप्राप्तस्य" संसाराध्वनो नद्या इव 'पारं पर्षन्' पारं यन्त्वित्यर्थः ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "विष्पितः = विप्राप्तः" संसाराध्वा—इत्युपपद्यते ॥ ५ (२०) ॥

तन्नस्तुरीपमद्भुतं पुरुवारं पुरुत्मना । त्वष्टा पोषाय विष्यतु राये नाभानो अस्मयुः ॥ तन्नस्तूर्णापि महत्सम्भृतमात्मना त्वष्टा धनस्य पोषाय विष्यत्वित्यस्मयुरस्मान् कामयमानो राश्पिनो राश्पी रपतेर्वा रसतेर्वा राप्सिनस्यायोरित्यपि निगमो भवत्यृञ्जतिः प्रसाधनकर्मा आ व ऋञ्जसे ऊर्जां व्युष्टिष्वित्यपि निगमो भवति ऋजुरित्यप्यस्य भवति । ऋजुनीती नो वरुण इत्यपि निगमो भवति । प्रतद्वसू प्राप्तवसू । हरी इन्द्र प्रतद्वसू अभि स्वरेत्यपि निगमो भवति ॥ ६ (२१) ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"तुरीपम् (८९)"—इति, अनवगतम्। "तूर्णापि"—इत्यवगमः। 'उदकम्'—अभिधेयम्, तद्धि तूर्णमाप्नोति। "तन्नस्तुरीप०—० नाभानो अस्मयुः॥"—इति (ऋ० सं० २, २, ११, ४)। दीर्घतमस आर्षम्। त्वाष्ट्री। अनुष्टुप्। आप्री-सूक्ते। 'तत् नः तुरीपम्' तदस्माकं तुरीपमुदकम्' 'अद्भुतं' च "महत्" इत्यर्थः। "अद्भुतः, बर्हिष्ठः"—इति महन्नामसु पठितम्। 'पुरुवारं' च बहुदेशान्तरमावृणोत्युदकम्' पुरुत्मना बह्वात्मना। यदेवंलक्षणमुदकम्, तत् 'नः' अस्माकं 'नाभा' नाभौ मध्ये 'त्वष्टा' 'विष्यतु' विमुञ्चतु वर्षभावेन। 'अस्मयु' अस्मान् अनुगृहीतुं "कामयमानः" 'राये पोषाय' "धनस्य पोषाय" इत्यर्थः, वर्षे हि सति पशवः पुष्यन्ति। अथवा 'नाभानः'—इति त्वष्टुरेव विशेषणं स्यात्, 'नाभानः' न अदीप्यमानः, किन्तर्हि? दीप्यमान एव विष्यतु॥ एवमत्र माध्यमिकस्त्वष्टेति विष्यत्वित्यनेन सम्बन्धात्, "तुरीपम्=उदकम्"—इत्युपपद्यते॥

"रास्पिनः (९०)"—इति, अनवगतम्। 'रापी'—इति वा स्यात्, 'रासी'—इति वा, "रपतेः वा" शब्दार्थस्य, "रसतेः वा" शब्दार्थस्यैव। रपणशीलो वा रसनशीलो यः, सः 'राप्सी'। "उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै। प्र वो नपातमपां कृणुध्वं प्रमातरा रास्पिनस्यायाः॥"—इति (ऋ० सं० २, १, १, ४)। कक्षीवत आर्षम्। त्रिष्टुप्। वैश्वदेवे सूक्ते। 'उत त्यौ' अपि तौ, अश्विनौ। 'मे' मम 'यशसा' हविर्लक्षणेन धनेन तर्प्यमाणौ, 'श्वेतनायै' उषसः काले प्राप्त 'व्यन्ता पान्ता'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वीताम् भक्षयेतां पुरोडाशम्, पिबेतां सोमम्। यतो ब्रवीमि,—हे 'औशिजः' मेधाविनः! ऋत्विजः! 'हुवध्यै' आह्वयध्वं तावश्विनौ। किञ्च, 'प्र' ब्रवीमि 'वः'—'कृणुध्वम्' 'अपां नपातम्' अपि, 'एतस्मिन् कर्मणि भागिनम्। किञ्च, 'प्रमातरौ' द्यावापृथिव्यावपि सर्वभूतनिर्मात्र्यौ कृणुतैव, एतस्मिन् कर्मणि भागिन्याविति एतच्च वो ब्रवीमि। कं च पुनरर्थं पुरस्कृत्य एतत् कुरुध्वम्? इति,—'रास्पिनस्य आयोः' रपणशीलस्य वा रसनशीलस्य वा शब्दकारिणो वर्षभूतस्योदकस्य प्राप्त्यर्थम्, अथवा स्तोतुः पुत्रस्य प्राप्त्यर्थम्। "आयवः"—इति मनुष्यनाम॥ एवमत्र 'रास्पिन'-शब्देन उदकं स्तोता वाभिधीयते, शब्दसारूप्यादर्थाविरोधाच्च॥

"ऋञ्जतिः(६१)" "प्रसाधनकर्मा"। "भाऋजीकः"—इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो निगमं नाधीते॥

केचित्त्वत्र एतं शेषमधीयते। "दूतं वो विश्ववेदसं हव्यवाहममर्त्यम्। यजिष्ठमृञ्जसे गिरा॥"—इति (ऋ० सं० ३, ५, ८, १)। वामदेवस्यार्षम्। गायत्री। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते। 'वः'—इत्येतस्य 'त्वम्'—इति विपरिणामः। हे यजमान! त्वं 'दूतम्' 'विश्ववेदसम्' सर्वप्रज्ञानम्, 'हव्यवाहम्' हविषां वोढारम्, 'अमर्त्यम्' अमरणधर्माणम्, 'यजिष्ठम्' यष्टृतमम्, 'ऋञ्जसे' प्रसाधयसि 'गिरा' स्तुत्येत्यर्थः॥ एवमत्र "ऋञ्जतिः' प्रसाधनकर्मा" दूतसम्बन्धात्॥

"ऋजुः(६२)"—"इत्यपि" "अस्य" एव ऋञ्जतेः "भवति"। "ऋजुनीती नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सजोषाः ॥"—इति (ऋ० सं० १, ६, १७, १)। गोतमस्यार्षम्। वैश्वदेवसूक्ते। गायत्री। गवामयनस्य द्वितीयेऽहनि शस्यते मैत्रावरुणस्य शस्त्रे। 'ऋजुनीती' ऋजुनयनः, ऋजुप्रज्ञो वा 'वरुणः' 'नः' अस्मान् इतो लोकादमुं लोकं कर्मफलप्राप्त्यर्थं 'नयतु'। 'मित्रः' च 'विद्वान्' नयतु। 'अर्य्यमा' 'देवैः' 'सजोषाः' सहप्रीयमाणः नयतु॥ एवमत्र 'ऋजु'-शब्देन प्रसिद्धं नयनम्, प्रसिद्धा वा मतिरुच्यते॥

"प्रतद्वसू (६३)"—इति, अनवगतम्। "प्राप्तवसू"—इत्यवगमः। 'अश्वौ' अभिधेयौ। "इह त्या सधमाद्या युजानः सोमपीतये। हरी इन्द्र प्रतद्वसू अभिस्वर॥"—इति (ऋ० सं० ६, १, १२, २)। नारदस्येयमार्षम्। उष्णिक्। महाव्रते औष्णिही तृचाशीतिः, तस्यां शस्यते। हे 'इन्द्र!' 'इह' कर्मणि 'त्या हरी' तावश्वौ 'प्रतद्वसू' "प्राप्तवसू" प्राप्तधनौ, तयोर्हि ऋजीषं धानाश्च धनम्, स हि ताभ्यां यज्ञे भागः प्राप्तः। 'सधमाद्या' सहमदनौ 'युजानः' युक्त्वा रथे, ततः 'सोमपीतये' सोमपानार्थम् 'अभिस्वर' अस्मान् प्रत्यागच्छ॥ एवमत्र "हरी"-इत्येनेन सम्बन्धात् "प्रतद्वसू=प्राप्तवसू" अश्वौ—इत्युपपद्यते॥ ६ (२१)॥

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्। ऋतस्य योगे विष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः॥ प्रहिणुत नोऽध्वरं देवयज्यायै प्रहिणुत ब्रह्म धनस्य सननाय ऋतस्य योगे यज्ञस्य योगे याज्ञे शकटे

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

इति वा शकटंशकृदितं भवति शनकैस्तकतीति वा शब्देन तक-तीति वा। श्रुष्टीवरीर्भूतनास्मभ्यमापः। सुखवत्यो भवता-स्मभ्यमापः चोष्कूयमाण इन्द्र भूरि वामम्। ददिन्द्र बहु वननीयम्। एधमानद्विलुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्॥ व्युदस्यत्येधमानानसुन्वतः सुन्वतोऽभ्यादधात्यु-भयस्य राजा दिव्यस्य च पार्थिवस्य च चोष्कूयमाण इति चोष्कूयतेश्चर्करीतवृत्तं सुमत्स्वयमित्यर्थः। उप प्रागात्सु-मन्मेधायि मन्म। उपप्रैतु मां स्वयं यन्मेमनोऽध्यायि यज्ञ नेत्याश्वमेधिको मन्त्रो दिविष्टिषु दिव एषणेषु॥ ७॥

"हिनोत (१४)" – इति, अनवगतम्। "प्रहिणुत"—इत्यव-गमः "हिनोता नो०—०भूतनास्मभ्य मापः॥"—इति (ऋ० सं० सं ७, ७, २६, १)। कवषस्यैयभार्षम्। अपोनप्त्रीयास्वृक्षु शस्यते। "हे ऋत्विजः! 'हिनोत' "प्रहिणुत" प्रगमयत, प्रोत्सर्पयत। एतम् 'अध्वरं' यज्ञम् 'देवयज्या' देवयज्यायै" देवयजनार्थम्। किञ्च, प्रहिणुत 'ब्रह्म' स्तुत्याख्यं यथाशास्त्रदृष्ट-क्रमेण। 'सनये' लब्धये 'नः' अस्माकं धनानाम्। किञ्च, 'ऋतस्य' "यज्ञस्य" 'योगे' संयोगे यदेतत् 'ऊधः' इव सोमपूर्णम् अधिष-वणचर्म वर्त्तते, अथवा योगसम्बन्धाच्छकटं योगः, तद्धि तत्र युज्यते, तेनाधिषवणचर्मैषः ऊधसोऽधस्तादवस्थितेनेति मन्यमानो भाष्यकारो ब्रवीति,—"याज्ञे शकटे—इति वा" यदेतद् यज्ञशकट-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्याधस्तादुपरि वाधिषवणचर्म, एतत् 'विष्यध्वम्' विमुञ्चध्वम् ग्रहचमस स्थाल्यादिषु यो निषेकः सोमस्य, एतद् विमोचनम् अधिषवणचर्मोंधसः, तद्धि सोमउत्सिच्यमाने श्लथीभवति, यथेतरद्गोरूधो दुह्यमानायां गवि। एवमृत्विज उक्त्वा अधुना ता एव सोमसम्मिश्रा अपो ब्रवीति,—यूयमपि हे 'आपः!' एभिः ऋत्विग्भिः उत्सिच्यमानाः 'श्रुष्टीवरीः' "सुखवत्यः" 'भूतन' "भवत" 'अस्मभ्यम्'॥ एवमत्र 'प्र'शब्देनार्थस्य सुतरां प्रकटता भवतीति भाष्यकारेण 'प्र'ब्देशोऽध्याहृतः, 'अध्वरम्'—इत्यनेन सम्बन्धाद्धिनोतेर्गत्यर्थत्वमुपपद्यते॥"

"प्रहिणुत"—इति 'आपः' उच्यन्त इति केचित्।

"शकटम्" "शकृदितं भवति"। यदा अनड्वान् युक्तः, शकृत् मुञ्चति, तेनेतमिति। "शनकैस्तकतीति वा" तद्धि भाराक्रान्तं शनकैर्गच्छति "शब्देन तकतीति वा" तद्धिशब्देन गच्छति॥

"चोष्कूयमाणः (६५)" "चोष्कूयते (६६)"—इति, एते अनवगते। धातुरेवायमप्रतीतः। एते सुवन्ततिङन्ते, तदनयोः पूर्वं 'सुबन्तम्' उत्तरं तिङन्तम्। दानार्थे वर्त्तमानस्य "चोष्कूयमाण इन्द्रभूरि वामम्"—इति (ऋ० सं० १, ३, १, ३)। निगममुक्त्वा "दददिन्द्र"—इति हि पूर्वस्य निर्वचनं चकार भाष्यकारः॥ व्युदसने वर्त्तमानस्योत्तरस्य "चोष्कूयते विश इन्द्रो मनुष्यान्" —इति (ऋ० सं० ४, ७, ३३, १)। निगममुक्त्वा 'चोष्कूयते' —इत्यस्य शब्दस्य "व्युदस्यति"—इति निर्वचनामाह भाष्यकारः॥ उभयत्रापि तु चोष्कूयतिशब्दश्चर्करीतवृत्तेन द्रष्टव्यः॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"चोष्कूयमाण इन्द्र भूरि वामम्"—इत्यस्य शेषः,—"नि सर्वसेन इषुधीरसक्त समर्य्यो गा अजति यस्य वष्टि। चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्धः॥"—इति (ऋ० सं० १, ३, १, ३)। हिरण्यस्तूपस्यार्षम्। ऐन्द्री। त्रिष्टुप्। उद्भिच्छलभिदोर्निष्केवल्ये शस्यते। 'न्यसक्त' न्यबध्नात् 'इषुधीन्' तूणान्, पृष्ठे रथस्य, 'सर्वसेनः' समग्रसेनः इन्द्रः। एवं तूणान् सनह्य बद्ध्वा, गोधाङ्गुलित्रवान् भूत्वा "समर्य्यो गा अजति" इषुभिर्मेघान् छिन्दन् 'सम् अजति' समस्ताः क्षिपति' 'गाः' अपः, 'अर्य्यः' ईश्वरः इन्द्रः। कस्मै समजति ? यस्य वष्टि। यस्य राज्ञो देशे कुटुम्बिनो वा क्षेत्रे कामयते, क्षेप्तुम्, तस्यैव क्षिपति, वर्षं प्रवर्त्तयत इत्यर्थः। एवं स्तूयमानः स इन्द्रः प्रत्यक्षीभूतः, यतः प्रत्यक्षकृत उत्तरोऽर्द्धर्चः। हे इन्द्र! चोष्कूयमाणस्त्वं ददत् उदकं जनेभ्यः 'भूरि' "बहु" 'वामं' "वननीयं" शस्यसम्पत्करम्, शृणु यत् कुरुष्व। 'मा पणिः भूः' मा वणिक्शीलोऽस्मान् प्रति मन्दोदकदाता कृपणो भूः। किन्तर्हि ? प्रवृद्धोदकः उन्नतचित्तः, अस्मान् प्रति बहूदकदाता भव॥ एवमत्र 'मा पणिर्भूर्भूरि वामम्'—इत्येभिः पदैः सम्बन्धात् 'चोष्कूयमाणः'—इत्यस्य "ददत्"—इत्येवमर्थ उपपद्यते॥

एवमत्र दानार्थः 'चोष्कूयति' "एधमानद्विळुभयस्य"—इत्यत्र व्युदसनार्थः। अस्य शेषः,—"शृण्वे वीर उग्रमग्रं दमायन्नन्यमन्यमतिनेनीयमानः। एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्॥"—इति (ऋ० सं० ४, ७, २३,

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

१)। गर्गस्य बार्हस्पत्यस्येयमार्षम्। त्रिष्टुप्। ऐन्द्री। 'दमायन्'—इत्येकं पदम्। 'शृण्वे वीरः' अश्रौषमहं वीरमिन्द्रम्, 'उग्रम्' उद्गूर्णवज्रम्। आदरार्थो द्विरभ्यासः आदरं चार्थभूयस्त्वम्, "अभ्यासे भूयांसमर्थं मन्यन्ते"—इति हि वक्ष्यति। अथवा 'उग्र" शत्रुं प्रति उद्गूर्णवज्रम्। 'दमायन्' दमयितारं शत्रूणाम्। कथं पुनरश्रौषम्? इति,—'अन्यमन्यम्' देवताविशेषम्, 'अतिनेनीयमानः' अतिशयेन स्वाभीष्टेन कामेन तुष्ट्रूषया 'अमुष्मात् सुतात् कामान् प्राप्स्यथ'—इत्येवं पुनः पुनः नयमानः। किम्पुनर्लक्षणं वीरमश्रौषम्? इति,—'एधमानद्विट्' "एधमानान्" दीप्यमानानपि "द्वेष्टि" "असुन्वतः" सोमाभिषवमकुर्वाणान् अयज्वन इत्यर्थः। अत एवं वैपरीत्येन "सुन्वतोऽभ्यादधाति"—इत्यध्याजहार भाष्यकारः। क्व पुनरादधाति? 'सुकृतस्य लोके'—इति सामर्थ्याद् गम्यते। ये हि सुन्वते, त इष्टा इन्द्रस्य, ये न सुन्वन्ति, ते द्वेष्याः, इत्यभिप्रायः। 'उभयस्य राजा' "दिव्यस्य च" धनस्येश्वरः "पार्थिवस्य च" मानुषस्य च। किञ्च, 'चोष्कूयते' व्युदस्यति,—यो 'विशः' एधमानानसुन्वत इतरांश्च सुन्वतः 'मनुष्यान्' अभ्यादधाति सुकृतस्य लोके इति॥ एवमत्र 'एधमानद्विट्'—इत्यनेन सम्बन्धात् "चोष्कूयतिः, व्युदसनार्थः"—इति उपपद्यते॥

"सुमत् (६७)"—इति, अनवगतम्। "स्वयम्"—इत्यवगमः। "उप॒ प्रागा॑त् सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑ वी॒तपृ॑ष्ठः। अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वानां॑ पु॒ष्टे च॑कृमा सु॒बन्धु॑म्॥"—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति (ऋ० सं० २, ३, ८, २)। दीर्घतमस आर्षम्। त्रिष्टुप्। अश्वदेवताका। "अश्वमेधेऽश्वतोमीयेन षोडशाहुतयो हूयन्ते, तत्रेयं विनियुक्ता। 'उपप्रागात्' "उपप्रैतु" "मां" प्रकर्षेण एतु। 'सुमत्' "स्वयम्" एव। 'यत्' यदनेन "यज्ञेन" प्राप्नुयाम् "इति"। 'मे' मम 'मनः' अपि "अध्यायि" अनेकविधान् सङ्कल्पविकल्पान् चकार, तत्तदहमेव, अहं मनसा ध्यातवानित्यर्थः। किम्पुनस्तत्? 'मन्म' मननीयमर्थजातम्। किञ्च, अयमपि 'वीतपृष्ठः' कान्तपृष्ठोऽश्वः 'उपप्रागात्' उपगच्छतु। 'देवानाम्' 'आशाः' यम् एतं वयं देवानां 'पुष्टे' पोषणाय 'चकृम' कृतवन्तः। 'सुबन्धुम्' शोभनयूपबन्धनम्। तमेतमुपगच्छन्तम् 'अनुमदन्ति' अनुमन्यन्ताम् 'विप्राः ऋषयः' मेधाविनः॥ एवमत्र शब्दसारूप्यादर्थोपपत्तेश्च 'सुमत्'—इत्यस्य "स्वयम्"—इत्येष विपरिणाम उपपद्यते॥

"आश्वमेधिकोऽयं मन्त्रः"—इति प्रकरणोपप्रदर्शनार्थमाह, मन्त्रार्थं निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमित्ति, एतदनेन प्रदर्शितं भवति॥

"दिविष्टिषु (६८)"—इति, अनवगतम्। "दिव एषणेषु" —इत्यवगमः। याभिः क्रियाभिर्दिवमिच्छन्ति गन्तुं ता दिविष्टयः॥ ७॥

स्यूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु। स्थूरः समाश्रितमात्रो महान् भवत्यणुरस्तु स्थवीयांसमुपसर्गो

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लुप्तनामकरणो यथा सम्प्रति कुरुङ्गो राजा बभूव कुरुगमनाद्वा कुलगमनाद्वा कुरुः कृन्ततेः क्रूरमित्यप्यस्य भवति कुलं कुष्णातेर्विकुषितं भवति दूतो व्याख्यातो जिन्वतिः प्रीतिकर्मा। भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय इत्यपि निगमो भवति ॥ ८ (२२) ॥

इति षष्ठाध्यायस्य चतुर्थः पदः ॥ ६, ४ ॥

"स्थूरं०—०दिविष्टिषु। राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशे ष्वमन्महि ॥"—इति (ऋ० सं० ५, ७, ३३, ४)। मेधातिथेरार्षम्। बृहती। दानमनया प्रशस्यते। 'स्थूरं' स्थूलंमहत, 'राधः' धनम्, 'शताश्वं' बह्वश्वसंयुक्तम्। 'कुरुङ्गस्य' 'राज्ञः' 'त्वेषस्य' महतः, 'सुभगस्य' शोभनस्य 'दिविष्टिषु' क्रियासु दक्षिणाभूतं सर्वेष्वपि 'तुर्वशेषु' मनुष्येषु याः रातयः दत्तयः, तासु च, एतदेव स्थूलमित्येवं वयम् 'अमन्महि' मन्यामह इत्यर्थः॥ एवमत्र 'दिविष्टि' शब्देन 'क्रिया' उच्यते, ताभिर्हि द्युलोकमिष्यते गन्तुम् ॥

"स्थूरः, समाश्रितमात्रो महान् भवति" समस्ता हि तत्र मात्रा आश्रिता भवन्ति। स्थूलप्रसङ्गेनैव अणुशब्दो निरुच्यते,—"स्थवीयांसमनु" यो वर्त्तते, सः "अणुः"—इत्युच्यते। अन्वित्ययम् "उपसर्गः" "लुप्तनामकरणः" येन प्रत्ययेन न्याय्यमेतन्नाम स्यात्, सोऽत्र लुप्तो न श्रूयत इत्यर्थः। कथं लुप्तः ? इति,—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"यथा सम्प्रति"—इति। अस्मिन्नामकरणलोपेन प्रयोगसिद्धिः, साम्प्रतम्—इति हिं न्याय्यम्, तथापि सम्प्रतीत्येवमपि वर्त्तमान-कालविषयप्रयोगः प्रसिद्धः, एवमिहाप्यनुशब्दे। कुरुङ्गो नाम राजा बभूव"। "कुरुगमनाद्वा" कुरुङ्गः, स हि कुरून् प्रति पुत्र-त्वेन गतो जेतुं वा। "कुलगमनाद्वा" शत्रुकुलानि हि स नित्य-मेव याति विजेतुम्। "कुरुः कृन्ततेः" स हि शत्रून् कृन्तति। "क्रूरम्"—"इति" एतत् "अपि" "अस्य" एव कृन्ततेः "भवति"। "कुलं कुष्णातेः (क्र्या० प०)" तद्धि "विकुषितम्" इव "भवति" विस्तीर्णत्वात्॥

"दूतः (९९)"—इति, अनवगतम्। "जूतः"—इति न्याय्यम्। "जवतेर्वा द्रवतेर्वा"—इति व्याख्यातम्॥

"जिन्वतिः (१००)" "प्रीतिकर्मा"—इति अर्थवचनम्, अप्रतीतार्थत्वात्। "समानमेतत्"—इत्यत्र उपरिष्टाद् व्याख्या-स्यामो द्वादशेऽध्याये॥ ८, २३)॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)
चतुर्थः पादः॥ ६, ४॥

———

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चमः पादः ॥

अमत्रोऽमात्रो महान् भवत्यभ्य मितो वा। महान् अमत्रो वृजने विरप्शीत्यपि निगमो भवति। स्तवे वज्यृची पमः। स्तूयते वज्यृचा समोऽनर्शरातिमनश्लीलदानमश्लीलं पापकमश्रिमद्विषमम्। अनर्शरातिं वसुदामुपस्तुहीत्यपि निगमो भवत्यनर्वाप्रत्यृतोऽन्यस्मिन्। अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्द्धया नव्यमर्कैः। अनर्वमन्यस्मिन् वृषभं मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा बृहस्पतिं वर्द्धय नव्यमर्कैरर्चनीयैः स्तोमैरसामि सामिप्रतिषिद्धं सामि स्यतेः। असाम्योजो विभृथा सुदानवः। असुसमाप्तं बलं बिभृत कल्याणदानाः ॥ १ (२३) ॥

"अमत्रः (१०१)"—इति, अनवगतम्। "अमात्रः"—इति शब्दसमाधिः। "महान् भवति"—इत्यर्थवचनम्, यो हि महान् भवति, न तस्य मात्राः प्रमातुं शक्यन्ते, अतोऽसावमत्र इत्युच्यते। "अभ्यमितो वा" स्यात्, अनभिहिंसितः केनचित्। "महाँ अमत्रो वृजने विरप्श्यु १ग्रं शवः पत्यते धृष्ण्वोजः। नाह विव्याच पृथिवी च नैनं यत् सोमासो हर्य्यश्वममन्दन् ॥"—इति (ऋ० सं० ३, २, १६, ४)। विश्वामित्रस्यार्षम्। त्रिष्टुप्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऐन्द्री। पृष्ठ्यस्य चतुर्थपञ्चमयोरह्नोर्माध्यन्दिने सवने अच्छावाकस्य शास्त्रे सम्पातं नाम सूक्तम्, तत्रेयं विनियुक्ता। 'महान्' प्रभावतः। 'अमत्रः' च अपरिमाणमात्रः' 'इन्द्रः' 'वृजने' संग्रामे 'विरप्शी' विरावणशीलः' 'उग्रम्' उद्गूर्णम् अभ्युद्यतम्, 'शवः' शत्रुबलम् 'पत्यते' पातयते। 'धृष्ण्वोजः' धर्षयितृ यस्य ओजः, बलम्, तत् 'पत्यते'। किञ्च, 'नाह विव्याच' 'नैनं' व्याप्नोति 'पृथिवी' नापि द्यौः, उपमानत्वेन। कदा पुनरेवं भवति? 'यत्' यदा 'सोमासः' सोमाः 'हर्य्यश्वम्' इन्द्रम् 'अमन्दन्' अतर्पयन्नित्यर्थः॥ एवमत्र 'शवः' 'पत्यते' 'वृजने'—इत्यनेन सम्बन्धात् "अमात्रः=महान्"—इत्युपपद्यते॥

"ऋचीषमः (१०२)"—इति, अनवगतम्। ईकारोऽत्रानवगतः। "ऋचा समः"—इत्यवगमः। "इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः। मित्रो न यो जनेष्वा यशश्चक्रे असाम्या॥"—इति (ऋ० सं० ७, ७, ६, २)। विमदस्यार्षम्। आस्तारपङ्क्तिः। ऐन्द्री। स पुनरैन्द्रो वा प्राजापत्यो वा वासुक्रस्य वा वसुकृतः। पृष्ठ्यस्य चतुर्थेऽहनि निष्केवल्ये शस्यते। 'श्रुतः' विख्यातः सर्वासु दिक्षु, 'इह' एतस्मिन् कर्मणि, 'अद्य' 'स्तवे' विजेतुं स्तूयतेऽस्माभिः 'वज्री'। किंलक्षणः? 'ऋचीषमः' "ऋचा समः" यावतैवार्थेन युक्तोच्चार्य्यते ऋक् स्तुत्यभिप्रायेण, तावानेवासौ भवत्यैश्वर्य्ययोगात्। किञ्च, 'मित्रो न' मित्र इव, यथा हि कश्चिदाप्तो मित्रो जनेषु यशः कुर्य्यात्, एवं य इन्द्रः 'यशः' 'आचक्रे' आभिमुख्येन सर्वासु दिक्षु करोति। किंलक्षणं


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुनर्यशः करोति? 'असामि' असमाप्तमनन्तमित्यर्थः। य एव-
ङ्गुणयुक्त इन्द्रः, सोऽस्माभिरिह स्तूयते॥ एवमत्र स्तुतिसम्बन्धात्
शब्दसारूप्याच्च "ऋचीषमः=ऋचा समः"—इत्युपपद्यते॥

"अनर्शरातिम् (१०३)"—इति, अनवगतम्। "अनश्लील-
दानम्"—इत्यवगमः। विग्रहप्रसक्तस्याश्लीलशब्दस्यार्थमाह,
"अश्लीलं पापकम्"—इति। न यस्याश्लीला रातिर्दानम्, सोऽन-
र्शरातिः। शब्दसारूप्यप्रसक्तमाह,—"अश्लीलम्=अश्रिमद् विष
मम्" तत्सारूप्योपपत्तितोऽश्लीलमित्युच्यते। "अनर्शरातिं
वसुदामुपस्तुहि भद्रा इन्द्रस्य रातयः। सो अस्य कामं विधतो
न रोषति मनो दानाय चोदयन्॥"—इति (ऋ० सं० ६, ७, २,
४)। "श्रायन्त इव सूर्यम्"—इत्यस्या अनन्तरैव। नेमस्या-
र्षम्। ऐन्द्री। सतो बृहती। हे स्तोतः! 'अनर्शरातिम्'
अपापदानम्, एनम् इन्द्रम् 'वसुदां' वसुदातारम्, 'उप' उपगम्यो-
पगस्य चेतसा 'स्तुहि'। किङ्कारणम्? यस्मात् 'भद्राः' भन्द-
नीयाः 'इन्द्रस्य' 'रातयः' दत्तयः। किञ्च, 'सः' 'अस्य' 'कामम्'
अभिप्रायं 'विधतः' दधतः, कामिनां कामान् 'न रोषति' न पीड-
यति। 'मनः' च 'इन्द्रस्य' आत्मनः 'दानाय' 'चोदयन्' भवति, य
एवं स्तुत्वा याचते॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च
"अनर्शरातिम्=अनश्लीलदानम्"—इत्युपपद्यते॥

"अनर्वा (१०४)"—इति, अनवगतम्। "अप्रत्यृतः"—इत्यव-
गमः। यः "अन्यस्मिन्" न आश्रितो भवति, स्वप्रधान एव सः
'अनर्वा'—इत्युच्यते। "अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वर्धया नव्यमर्कैः। गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्त्ताः॥"—इति (ऋ० सं० २, ५, १२, १)। अगस्त्यस्यार्षम्। बार्हस्पत्या। त्रिष्टुप्। हे स्तोतः! 'अनर्वाणं' स्वेन महिम्ना युक्तम्, अप्रतिगतं कञ्चिदन्यं प्रत्यधीनत्वेन, 'वृषभं' वर्षितारम्, 'मन्द्रजिह्वम्' "मन्दनजिह्वम्" हर्षकरो हि तस्य जनानां स्तनयित्नु, घोषः, "जिह्वा, घोषः"—इति हि वाङ्नामसु पठितम्। 'बृहस्पतिं' 'वर्द्धय'। 'नव्यं' स्तुत्यम्, 'अर्कैः' मन्त्रैः। किंलक्षणं बृहस्पतिम्? इति,—'गाथान्यः' स्तुतिप्रापणार्हाः 'देवाः' 'सुरुचः' सुदीप्तिमन्तः, 'यस्य' शुष्मम् 'आ' आभिमुख्येन स्थित्वा 'शृण्वन्ति' आदरेण, 'मर्त्ताः' च। 'नवमानस्य' नवो हि मानः तस्य, अहन्यहनि अनया स्तुत्या स्तुत्यस्य भवति, तेनासौ नवमानः, तस्य, अथवा 'नवमानस्य' प्रशासतः इत्यर्थः। अथवायमन्यो मन्त्रार्थः स्यात्, ऐतिहासिकपक्षेण,—'मन्द्रजिह्वः' हर्षकरी हि जिह्वा, तस्य स्तुतिः। 'गाथानीः' स एव पौरहित्येन गाथाः स्तुतीर्नयति प्रापयति देवान् प्रति। स एव च 'सुरोचनः'। तस्यैव च 'नवमानस्य' स्तुवतः 'देवा आशृण्वन्ति' 'मर्त्ताः' च। "बृहस्पतिर्वै देवानां पुरोहितः"—इति ह विज्ञायते। तस्मादेवमप्युपपद्यते। एवं, मन्त्रार्थाविरोधात् "अनर्वा = अप्रत्यृतः"—इत्युपपद्यते॥

"असामि (१०५)"—इति, अनवगतम्। सामीति समाप्तमुच्यते, तस्य प्रतिषेधः असामि॥ "असाम्योजो बिभृथा सुदानवोऽसामिधूतयः शवः। ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्॥"—इति (ऋ० सं० १, ३, १६, ५)। कण्वस्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

र्षम्। सतो बृहती। मारुती। हे 'सुदानवः' "कल्याणदानाः" मरुतः! यूयम् 'असामि' अपरिसमाप्तम् अनन्तम्, 'ओजः' "बलम्" 'शवः' अभिवृद्धिरूपञ्च बलम् 'बिभृथ' धारयथ। 'असामिधूतयः' असमाप्तगतयः। धवनं धूतिः, "धवति, धावति"—इति गतिकर्मसु पठितम्। एतत् कुरुध्वम्। य एषः 'ऋषिद्विष्टा' स्तोतृद्वेष्टा, तस्मै हे मरुतः! 'परिमन्यवे' प्रकृष्टक्रोधाय 'इषुं न' इषुम् इव 'द्विषं' सर्वलोकद्वेष्यतां 'सृजत' क्षिपत॥ एवमत्र "असामि=असुसमाप्तम्"—इत्युपपद्यते, अर्थाविरोधात्॥ १ (२३)॥

मा त्वा सोमस्य गल्दया सदा याचन्नहङ्गिरा। भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत्॥ मा चुक्रुधं त्वां सोमस्य गालनेन सदा याचन्नहं गिरा गीत्या स्तुत्या भूर्णिमिव मृगं न सवनेषु चुक्रुधं क ईशानं न याचिष्यत इति गल्दा धमनयो भवन्ति गलनमासु धीयते। आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्। नानाविभक्तीत्येते भवत आगलना धमनीनामित्यत्रार्थः ॥ २ (२४)॥

"गल्दया (१०६)—इति, अनवगतम्। 'गलितधानी स्यात्' गलितं हि तस्यां धीयते। "धमनिर्भवति"—इत्यभिधेयवचनम्, नाडीत्यर्थः। "मा त्वा सोमस्य०—०न याचिषत् ॥"—इति

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

(ऋ० सं० ५, ७, १३, ५)। मेधातिथेरार्षम्। ऐन्द्री। बृहती। महाव्रते बृहतीसहस्रे विनियुक्ता। हे इन्द्र! 'मा चुक्रुधं त्वा' मा क्रोधयेयम् 'अहं' 'सोमस्य' 'गल्दया' "गालनेन" धमनेन, पूरणेन सोमस्य 'सदा' नित्यकालमपि 'याचन्' 'गिरा' गीत्वा स्तुत्या च 'सवनेषु' यज्ञेषु। कथञ्च पुनर्मा चुक्रुधम्? इति। 'भूर्णि न' 'मृगम्' इव। भ्रमणशीलो भूर्णिः। कः पुनरसौ? व्याघ्रो वा सिंहो वा, स हि भ्रमणशीलो बिभर्त्ति च शृगालादीन्। तेनेन्द्र उपमीयते। यथा शृगालादयो लाङ्गूललालनादिनो-पचारेणोपसर्पमाणः तं न क्रोधयन्त्येवमहं सोमसम्प्रदानपूर्विकया स्तुत्योपसर्पमाणो मा चुक्रुधं भवन्तमिति। अथ मतम्,—यदि मम क्रोधात् बिभेषि, मास्मान् याचेथा इति। "क ईशानं न याचिषत्" को हि नाम सोऽस्ति लोके, य ईशानमीश्वरं न "याचिष्यते"? न ह्ययाचतां वृत्तिः सिध्यति॥ एवमत्रेन्द्रस्य या 'गलना' धमनिः, यया सोम आगल्यते सा, तेनैव आगलनेन उपलक्ष्यमाणा "गल्दा"—इत्युच्यते, न ह्येवमर्थविरोधोऽस्ति।

"गल्दा धमनिर्भवति"—इत्यस्य भाष्यकारवाक्यस्य मन्त्रे नात्र धमनिलिङ्गं विशिष्टमस्तीत्यतो विशिष्टलिङ्गमन्यदुदाहरणं ब्रवीति,—"आ त्वा विशन्त्विन्दवः"—इति। हे इन्द्र! 'आविशन्तु' 'त्वा' त्वाम् 'इन्दवः' सोमाः। कथञ्च पुनराविशन्तु त्वामिन्दवः? 'आगल्दाः धमनीनाम्' याः "आगलनाः" धमनयः, याभिरनुप्रविष्टाः सन्तो नवं मदमुत्पादयन्ति, अधोवाहिन्यो याः, ताभिराविशन्तु। शेषो मृग्यः॥ एवमिह

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

'धमनी'शब्दसहयोगी 'गल्दा'शब्द इति कृत्वा "अ:गल्दा=धमनि:" —इति उपपद्यते ॥

"नानाविभक्तीत्येते" पदे "भवतः"—'गल्दया' 'गल्दा'—इति, न तु नानार्थे। आह,—कोऽभिप्रायः ? इति, उच्यते,– पूर्वस्मिन् मन्त्रे यद्यपि धमनिशब्दो नास्ति, तथापि निगमे 'गल्दा'-शब्देन धमनिरेवोच्यते। तत्र "गल्दा धमनीनाम्"—इत्येतदेव ज्ञापकमित्यभिप्रायः। 'गल्दया'—इति तृतीयान्तम्, 'गल्दाः'—इति प्रथमाबहुवचनान्तम्। एतदनयोर्नानाविभक्तित्वम् ॥ २ (२४)॥

न पापासो मनामहे नारायासो न जल्हवः। न पापा मन्यामहे नाधना न ज्वलनेन हीना अस्त्यस्मासु ब्रह्मचर्य्यमध्ययनं तपो दानकर्मेत्यृषिरवोचद् बकुरो भास्करो भयङ्करो भासमानो द्रवतीति वा ॥ २ (२५) ॥

"जल्हवः (१०७)"—इति, अनवगम्। "ज्वलनहीनाः" —इत्यवगमः। "न पापासो मनामहे नारायासो न जल्हवः। यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै ॥"—इति (ऋ० सं० ६, ४, ३७, ६)। भर्गो नाम प्रगाथपुत्रः, तस्येयमार्षम्। ऐन्द्री। बृहती। तस्यामेव तृचाशीत्यां विनियुक्ता। 'न' वयं 'पापासः' "पापाः"इत्येवं 'मनामहे' "मन्यामहे"। किङ्कारणम् ? अस्त्यस्मास्वपापत्वे हेतुः,—'ब्रह्मचर्य्यम्, अध्ययनम्, तपः, दानकर्म' च। अथ मतम्, एतैरपि गुणैर्यो निर्धनः, स पाप

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

एवेति ? तच्च न। किङ्कारणम् ? 'न अरायासः' न वयमधनाः। अथापि स्याद्धनवत्त्वेऽपि सति अनाहिताग्नित्वात् ज्वलनहीनत्वेन पापवत्त्वमिति ? तदपि न। किङ्कारणम् ? 'न जल्हवः' न वयं "ज्वलनहीनाः" किन्तर्हि ? आहिताग्नयो वयम्। तदेतदध्ययनाद्यपापत्वहेतुभूतं सर्वमस्मास्वस्ति। किञ्च, 'यदिन्न्विन्द्रं' यस्माद् वयम् इन्द्रं 'वृषणं' वर्षितारम्, एतस्मिन् यज्ञकर्मणि 'सखायं' सहभूतस्य सोमपानस्य ख्यापयितारम्, अमीभिः सह मया सोमः पीत इत्येवं वक्तारं 'कृणवामहै'। तस्मात् न वयं पापाः, नापि वयमरायासः, नापि जल्हवः,—इत्येवमात्मानं मन्यामहे, न हि पापानामधनानामनाहिताग्नीनां च इन्द्रः सखा भवतीत्यभिप्रायः॥ एवमत्र "जल्हवः=ज्वलनहीनाः" शब्दसारूप्यादर्थाविरोधाच्च॥

"वकुरः (१०८)"—इति, अनवगतम्। "भास्करः, भयङ्करः, भास्वद्द्रवणो वा"—इति शब्दसमाधयः॥ २ (२५)॥

यवं वृके॑णाश्विना॒ वप॒न्तेषं॑ दु॒हन्ता॒ मनु॑षाय दस्रा।
अ॒भि दस्युं॒ बकु॑रेणा॒ धम॑न्तो॒रु ज्योति॑श्चक्रथु॒रार्या॑य॥

यवमिव वृकेणाश्विनौ निवपन्तौ वृको लाङ्गलं भवति विकर्त्तनाल्लाङ्गलं लङ्गतेर्लाङ्गूलवद्वा लाङ्गूलं लगतेर्लङ्गतेर्लम्बतेर्वान्नं दुहन्तौ मनुष्याय दर्शनीयावभिधमन्तौ दस्युं वकुरेण ज्योतिषा वोदकेन वार्य्य ईश्वरपुत्रो बेकनाटाः खलु कुसीदिनो भवन्ति द्विगुणकारिणो वा द्विगुणदायिनो वा

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्विगुणं कामयन्त इति वा। इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत कृत्वा पणीँरभि। इन्द्रो यः सर्वान् बेकटनाटान् हर्दृशः सूर्यदृशो य इमान्यहानि पश्यन्ति न पराणीति वाभिभवति कर्मणा पणींश्च वजिजः ॥ ३ (२६) ॥

"यवं वृकेणाश्विना०—०रार्य्याय ॥"—इति (ऋ० सं० १, ८, १७, १)। कक्षीवत आर्षम्। आश्विनी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'यवं' यवादि धान्यं 'वृकेण' लाङ्गलेन। 'वपन्ता' "वपन्तौ" युवाम् 'अश्विना' हे "अश्विनौ!" तत्कृतौ, यत्कृते महानुग्रहे सति वर्षादौ लाङ्गलकर्मणः फलसम्पद् भवतीत्यतः तावेवाश्विनौ वपन्तावित्युच्यते। 'इषम्' "अन्नम्" 'दुहन्ता' "दुहन्तौ" प्रपूरयन्तौ 'मनुषाय' "मनुष्याय"। 'दस्रौ' शत्रूणां दासयितारौ दंसयितारौ वा, कर्मणां कृष्यादीनां कारयितारौ वा वर्षाद्यनुग्रहेण, एतावेवंविधं कर्म कारयन्तौ कुर्वाणौ वा। 'अभि-दस्युम्' दासयितारमनाकालं दुर्भिक्षं 'धमन्ता' धमन्तौ विनाशयन्तौ, कृत्स्नं जगदभिपुष्यन्तौ युवाम्। केन पुनरभिधमन्तौ? इति,—'बकुरेण' जलसमूहेन ज्योतिःसमूहेन, च, मध्यस्थानो ह्युदकसमूहेन, द्युस्थानो ज्योतिषा, शस्यमनुगृह्णाति, ततो दुर्भिक्षं ध्वस्यते जगच्च पुष्यति। किञ्च, युवामेव 'उरुज्योतिः चक्रथुः' विस्तीर्णमविकलं चक्षुः चक्रथुः। 'आर्य्याय' "ईश्वरपुत्राय" ऋज्राश्वाय, स हि युवाभ्यां चक्षुर्हीनः चक्षुष्मान् कृत इत्यभि-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रायः ॥ एवमत्र ज्योतिःसमूह उदकसमूहश्च 'बकुर'शब्देनोच्यते, शब्दार्थाविरोधात्। "ज्योतिषा वोदकेन वा"—इति भाष्यपाठः ॥

"बेकनाटान् (१०६)"—इति, अनवगतम्। "द्विगुणकारिणो वा" "द्विगुणदायिनो वा" 'द्विगुणकामिनो वा'—इति शब्दसमाधयः। इन्द्रो विश्वान् बेकनाटाँ। अहर्दृश उ त क्रत्वा पणीँरभि। कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम् ॥"—इति (ऋ० सं० ६, ४, ४६, ५)। प्रागाथः कलिर्नाम, तस्यार्षम्। ऐन्द्री। बृहती। महाव्रते बार्हस्पत्यां तृचाशीत्यां विनियुक्ता। 'इन्द्रः' 'विश्वान्' "सर्वान्" 'बेकनाटान्' "कुसीदिनः" वृद्धिजीवनान्, 'अहर्दृशः' यैरिहैव जन्मनि सूर्य्यो दृष्टो न पुनर्द्रक्ष्यन्तीत्यर्थः। अथवा "ये इमानि" एव "अहानि पश्यन्ति" विषयभोगप्रधानाः, नास्तिकतया, "न" पारलौकिकेष्वहःसु,—अस्य दुष्कृतस्य कर्मणः कोऽपि फलपरिणामो भविष्यतीत्येवं भावि न पश्यन्ति, तानभिभवति। 'क्रत्वा' स्वेन "कर्मणा"। 'उत पणीन्' अपि पणीन्। "पणिर्वणिग् भवति" न हि विशुद्धेन कर्मणा व्यवहरन्ति। याभिरेतत् कर्म करोति, याभिः पुनरेवमादीन् दुष्कृतकारिणो विभवति, 'कत् उ महीः' क्व ता महत्यः सेनाः ? 'अस्य' इन्द्रस्य 'अधृष्टाः' अनाधर्षितपूर्वाः परैः, 'तविषीः' याश्च महत्यः। 'कत् ऊ वृत्रघ्नः' क्व च वृत्रघ्नः इन्द्रः ? यस्य 'अस्तृतम्' अनुपहतं बलम्, येनैतान् हन्तीति ॥ एवमत्र "बेकनाटाः=कुसीदिनः" अर्थाविरोधादित्युपपद्यते ॥ ३ (२६) ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जीवान्नो अभिधेतनादित्यासः पुरा हथात्। कद्ध स्थ हवनश्रुतः॥ जीवतो नोऽभिधावतादित्याः पुरा हननात् क नु स्थ ह्वानश्रुत इति मत्स्यानां जालमापन्नानामेतदार्षं वेदयन्ते मत्स्या मधा उदके स्यन्दन्ते माद्यन्तेऽन्योन्यं भक्षणायेति वा जालं जलचरं भवति जलेभवं वा जलेशयं वांहुरोऽहस्वानंहूरणमित्यप्यस्य भवति। कृण्वन्नंहूरणादुर्वित्यपि निगमो भवति। सप्त मर्य्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात्। सप्त मर्य्यादाः कवयश्चक्रुस्तासामेकामप्यधिगच्छन्नंहस्वान् भवति स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनः पुनः सेवां पातके नृतोद्यमिति बत इति निपातः खेदानुकम्पयोः॥ ४ (२७)॥

"अभिधेतन (११०)"—इति, अनवगतम्। "अभिधावत" —इत्यवगमः। "जीवान्नो ०—०हवनश्रुतः॥"—इति (ऋ० सं० ६, ४, ५१, ५)। उक्तमार्षं भाष्यकारेणैवात्रोपप्रदर्शनार्थम्, एवं सर्वत्र परिज्ञेयमार्षमिति। गायत्री। आदितेयी। 'आदित्यासः' हे "आदित्याः!" 'जीवात् नः' "जीवतः" अस्मान् 'अभिधेतन' "अभिधावत" यूयम् 'पुरा हथात्' "पुरा हननात्" अहतान् अस्मान् सम्भावयतेत्यभिप्रायः। 'कत् ह स्थ' "क नु स्थ" यूयम्?

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

येन न शृणुत क्षिप्तं, नाभिधावत हे 'हवनश्रुतः !' ते ह्यार्त्तानामाह्वानं शृण्वन्ति ॥ एवमत्र 'पुरा हथात्'—इत्यनेन सम्बन्धात् "अभिधेतन=अभिधावत"—इत्येष विपरिणाम उपपद्यते ॥

ऋषेर्वा मत्स्यवधकारुण्यभिभूतस्यैतदार्षम्, मत्स्यानां वा केचिन्मन्यन्ते। "मत्स्याः, मधौ उदके स्यन्दन्ते" मधु इत्युदकनाम, तत्र हि ते स्यन्दन्ते गच्छन्ति। "स्यन्दति, कसति"—इति गतिकर्मसु पठितम्। "माद्यन्ते" हृष्यन्ति "अन्योन्यं भक्षणाय —इति वा" मत्स्या हि इतरेतरभक्षजीविनः। "जालम्, जलचरं भवति" तद्धि जले चरति। "जले भवं वा" जले वा भवति। "जलेशयं वा" जले वा शेते इति जालम् ॥

"अंहुरः (१११)"—इति, अनवगतम्। "अंहस्वान्"—इत्यवगमः। रो मत्वर्थे। "अंहूरणम्—इत्यप्यस्य भवति"—इति प्रासङ्गिकम्, एवमपि हि प्रयोगो भवतीति। "त्रितः कूपेऽवहितो देवान् हवत ऊतये। तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी॥" इति (ऋ० सं० १, ७, २३, २)। "सप्त मर्य्यादा"—इत्येते त्रितस्यैव कूपे पतितस्यार्षे। एतयोः पूर्वा कुत्स्यस्य वा। वैश्वदेवी। पङ्क्तिः। प्रातरनुवाकाश्विनयोर्विनियुक्ता। 'त्रितः' 'कूपे' 'अवहितः' पतितः, 'देवान्' 'हवते' आह्वयते, 'ऊतये' रक्षणायात्मनः। तस्य आह्वानं 'बृहस्पतिः शुश्राव'। "वित्तं मे अस्य रोदसी"—इत्येतत् पुनःपुनरुच्यमानं द्यावापृथिव्यौ शुश्रुवतुः। किमित्येतदसौ श्रावयाञ्चकार? इति, —'कृण्वन्' 'अंहूरणात्' अंहस्वतः कूपात् आत्मनः। 'उरु' विस्तीर्णं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्राणं कुर्वन् ॥ एवमत्र "अन्धकूपः = अंहुरणः"—इत्युपपद्यते, प्रकरणाविरोधात् ॥

"सप्त मर्य्यादाः०—०गात्। आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे धरुणे तस्थौ ॥"—इति (ऋ० सं० ७, ५, ३३, ६)। 'सप्तमर्य्यादाः' सप्त स्थितीः 'कवयः' मेधाविनः, हिरण्यगर्भमनुप्रभृतयः 'ततक्षुः' कृतवन्तः। नित्या एव हि ताः, तैस्तु तत्प्रख्यापकोऽनुस्मरणार्थो ग्रन्थसन्दर्भोऽभिव्यञ्जितः, एतदेव करणमित्युपचर्य्यते। "तासामेकामिदभ्यं हुरो गात्"। 'इत्'—इत्यनर्थकः, अप्यर्थे वा। 'तासां' मर्य्यादानाम् 'एकाम्' "अभिगच्छन्" अभिक्रामन् "अंहस्वान् भवति"। 'गात्'—इत्येतत्, अभेः समीपमाकृष्य "एकामप्यभिगच्छन्"—इति। कतमाः पुनस्ता मर्य्यादाः? इति,—"स्तेयम्" "तल्पारोहणम्"—इत्येवमाद्याः। यः पुनरेतानभिगच्छति, तस्य किम्? इति,—सः 'आयोः' अयनस्य सूर्य्यस्य 'स्कम्भे' स्तम्भने मण्डले 'उपमस्य' सर्वभूतोपनिर्मातुरादित्यान्तरपुरुषस्य 'नीडे' निलयने स्थाने, यानि धरुणानि धारयितॄणि स्थानानि 'अप्रध्वंसीनि' आभूतसंप्लवस्थायीनि, तेषु 'तस्थौ' तिष्ठति। आह,—कस्मिन् काले इति? उच्यते,—'पथां विसर्गे' विषयानुप्रवेशमार्गभूतानामिन्द्रियाणां 'विसर्गे' विसर्जनकाले प्राप्ते, मृत्युकाल इत्यर्थः ॥ मर्य्यादासम्बन्धात् स्पष्टतर एष निगम इत्यतो द्वितीय उपात्तः, स्मृतिसमाचारस्थानेन प्रतिविशिष्ट उपदर्शितो भविष्यतीत्येवं मन्त्रे एवोपश्रुत्य सर्व एव समाचारः विशिष्टैः स्मृतिकारैः सन्दृष्टो न स्वतन्त्र इति ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"वत—इति निपातः, खेदानुकम्पयोः"। "वत (११२)" —इति, अनवगतम्, अनेकार्थञ्च। "निपातः"—इति पदजात्यवधारणम्। "खेदानुकम्पयोः"—इत्यर्थवचनम् ॥ ४ (२७) ॥

वतो ब तासि यम नैव ते मनो हृदयञ्चाविदाम। अन्या किल त्वां कक्ष्येव युक्तं परिष्वजाते लिबुजेव वृक्षम्। वतो बलातीतो भवति दुर्बलो वतासि यम नैव ते मनो हृदयञ्च विजनीमोऽन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्येव युक्तं लिबुजेव वृक्षं लिबुजा व्रततिर्भवति लीयते विभजन्तीति व्रततिर्वरणाच्च शयनाच्च ततनाच्च वाताप्यमुदकं भवति वात एतदाप्याययति। पुनानो वाताप्यं विश्वश्चन्द्रमित्यपि निगमो भवति। वने न वायो न्यधायि चाकन्। वन इव वायो वेः पुत्रश्चायन्निति वा कामयमान इति वा वेति च य इति च चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चार्थो रथर्यतीति सिद्धस्तत् प्रेप्सू रथङ्कामयत इति वा। एष देवो रथर्यतीत्यपि निगमो भवति (२८)। धेनुं न इषं पिन्वतमसक्राम्। असंक्रमणीम् ॥ ५ ॥

इति षष्ठाध्यायस्य पञ्चमः पादः ॥ ६, ५ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"ब॒तो ब॑तासि०—०वृ॒क्षम्"—इति (ऋ० सं० ७, ६, ८, ३)। यमी, यमं ब्रवीति,—"दुर्बलः 'बत' दुर्बलहृदयः त्वम्, अधर्मभीरुर्मोहमयस्त्वम्। एवमसकृन्मया प्रार्थ्यमानः खेदमुपयासि,—नेच्छसि मया सम्भोक्तुं स त्वं सर्वथा ह्यनुकम्प्यः, शोच्य इत्यर्थः। अथवा 'नैव' 'ते' तव 'मनः' सङ्कल्पम्, 'हृदयं' हृद्गतमध्यवसायञ्च 'विजानीमः'। अथवा लब्धस्ते मयाभिप्रायः,—'अन्या किल त्वां' मत्तो विशिष्टतरा योषित्; 'परिष्वजाते' "परिष्वङ्क्ष्यते" ततः 'किल' त्वं मां तयापहृतचेतस्त्वात् नेच्छसि परिष्वक्तुम्। कथञ्च पुनरन्या त्वां परिष्वङ्क्ष्यते ? 'कक्ष्येव युक्तम्' 'लिबुजेव वृक्षम्'। 'कक्ष्या' कक्षजाता 'इव' सुवृद्धा, 'लिबुजा' वल्ली, यथा 'युक्तम्' आत्मना संयुक्तम् समीपजं परिष्वजेत् परिवेष्टयेत्, एवं किल त्वामन्या परिष्वङ्क्ष्यते इति॥ एवमत्र प्रकरणाविरोधात् 'बत'—इत्येष निपातः खेदानुकम्पयोः॥ अत्र 'कक्ष्येव युक्तम्'—'लिबुजेव वृक्षम्'—इत्येकः 'इव'-शब्दोऽनर्थकः, अथ वोपमानद्वयमेव स्यात्,—कक्ष्येव च, लिबुजेव च,—यथा कक्ष्या च लिबुजा च परिष्वजनीयौ अश्वत्थवृक्षौ परिष्वजेते, एवं परिष्वङ्क्ष्यते इति॥

"वाताप्यम् (११३)"—इति, अनवगतम्। "उदकं भवति" इत्यभिधेयवचनम्। "वातः" हि "एतत्" उदकम् "आप्याययति" शीतं करोति। अथवा आप्याययतिर्वृद्ध्यर्थः स्यात्, पुरो वातेन हि वृष्टिभूतमुदकं संवर्द्धते। "नू नो॑ र॒यिमुप॑मास्व नृ॒वन्तं॑ पुना॒नो वा॒ताप्यं॑ वि॒श्वश्च॑न्द्रम्। प्र व॒न्दि॒तुरि॑न्दो ता॒र्य्यायुः

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रातर्मक्षू धियावसुर्जगम्यात् ॥"—इति (ऋ० सं० ७, ४, ३, ५)। नोधसो गौतमस्यार्षम्। पावमानी सौमी। हे सोम! 'नू नः' क्षिप्रमस्माकम् 'रयिम्' धनम् 'उपमास्व' उपनिर्मिणुहि। 'नृवन्तं' पुत्रपौत्रैः सहितम्। 'पुनानः' पूयमानः। 'वाताप्यम्' उदकं प्राप्य द्रवीभूतः। 'चन्द्रं' चायनीयमुदकम्। 'विश्वः' च सर्वः पूयमानः। किञ्च,—'प्रतारि' प्रतीर्णं दीर्घं कुरु—हे 'इन्दो' सोम! 'वन्दितुः' स्तोतुः 'आयुः'। किञ्च, तथा उपमास्व, यथा 'प्रातः' नित्यमेव 'धियावसुः' कर्मवसुः। इन्द्रः त्वां पातुमस्माकम् 'आजगम्यात्' आगच्छेदित्यर्थः॥ एवमत्र "वाताप्यम्=उदकम्" अर्थाविरोधाच्छन्दोपपत्तेश्च॥

"चाकन् (११४)"—इति अनवगतम्। "चायन्"—इति, "कामयमानः"—इति शब्दसमाधी॥ "वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरण्यावजीगः। यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्॥—इति (ऋ० सं० ७, ७, २२, १)। वसुक्रस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। 'वने न' "वने इव" वृक्षे इव। शकुनिः, स्वे नीडे वायमात्मीयं पुत्रं 'न्यधायि' निदधाति 'शिशुकम्' अजातपक्षम्। स यथा तत्र निहितः 'चाकन्' "चायन्" पश्यन्, भयाद् दिशो निरीक्षमाणः आसीत्, अथवा "कामयमानः" तदुत्सुकमना आसीत्॥ एवमयमस्मासु वृक्षस्य नीडभूतेषु शकुनिपुत्रभूतः, 'शुचिः' व्यपगतसर्वदोषः युवयोः स्वभूतः, 'स्तोमः'। हे 'भुरण्यौ' भर्त्तारौ अश्विनौ! शीघ्रौ वा, भुरण्युरिति क्षिप्रनामेति। किञ्च, यस्य स्तोमस्य 'पुरुदिनेषु'

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वहुष्वहःसु 'इन्द्रो होता' इन्द्रोऽप्याह्वाता भवति,—ममायं स्तोमः स्यादिति। किंलक्षणः पुनरिन्द्र आह्वाता? यः 'नृणां नृतमः' मनुष्याणामपि मनुष्यतमः, शूराणामपि मध्ये शूरतम इत्यर्थः। 'नर्य्यः' च नृभ्यो हितः, यः 'क्षपावान्' च रात्रिपर्य्यायेषु सोम भागी। एवङ्गुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यते, अस्मासु वर्त्तमानः, स युवां प्रति 'अजीगः' नित्यकालमेव गच्छतीत्यर्थः॥

एवन्तावदेतामृचमाश्विनीमिति कृत्वा व्याचक्षते, तदसाधु, ऐन्द्रे हि सूक्ते प्रथमैवेयमृग् भवति। तच्च पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्द्धमाने माध्यन्दिने सवने ब्राह्मणाच्छंशिनः शस्त्रे विनियुज्यते। हे 'भुरण्यौ' भर्त्तारौ, देवतानां पती! य एषः स्तोमोऽस्मासु निहितः, 'शुचिः' व्यपगतदोषः, शकुनिपुत्र इव, 'वने' वनावयवे वृक्षे, 'चाकन्' पश्यन्निव कामयमान इव वा इन्द्रम् आस्ते यः स्तोमः, तस्य किम्? इति,—यस्ये न्द्रः पुरुदिनेषु वहुष्वहःसु आह्वाता अभूत्, अपि नाम मामनेन स्तोमेन स्तुयुरिति। किंलक्षणः पुनराह्वाता यस्येन्द्रः? इति, —नृणां नृतमः नर्य्यश्च क्षपावांश्च। समानमेतत् पूर्वेणैवार्थेन। यमेवमिन्द्रः प्रार्थयते, स एषः स्तोमः, तं प्रत्यजीगः, गच्छतीत्यर्थः। अथवा स एषः स्तोमोऽस्माभिरुदीर्य्यमाणः, तस्येन्द्रस्य गुणान् गृह्णातीति स्यात्, "जिगर्त्तिः०—०गृह्णातिकर्मा वा"—इति ह्युक्तम्॥ एवमत्र 'चाकन्'—इत्यस्य "चायन्"—इति, "कामयमानः—इति वा"—इत्येतौ विपरिणामावुपपद्येते, शब्दसारूप्यादर्थाविरोधाच्च॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एतस्मिन्निगमे पदविभागतः कश्चिद् विचारोऽस्ति, तमाह भाष्यकारः,—"वा—इति च, यः—इति च, चकार शाकल्यः" —इति। शाकल्यः पदकारः। तदेतत् विचार्य्यमाणं न साधु भवति, किङ्कारणम्? "उदात्तं त्वेवमाख्यातमभविष्यत्"। 'एवम्' एतस्मिन् पदद्वये सति, यदेतत् 'आख्यात' न्यधायीति, एतत् 'उदात्तम् अभविष्यत्' यद्वृत्तात् परस्य नित्यमाख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते, न चेदमुदात्तम्. तस्मात् 'यः'—इति नेदं यद्वृत्तम्। किन्तर्हि? 'वायः'—इति एकं पदम्। किञ्च, "असुसमाप्तश्चार्थः" अपुष्कलः, एवमेतस्मिन् पदद्वये सति मन्त्रस्यार्थोऽसुसमाप्तो भवति। कथम्? द्विपदत्वे हि सति 'वा' शब्दस्यार्थेन केनचित् भवितव्यम्, न चेह विकल्पः समुच्चयो वा कश्चिदर्थोऽस्ति। तस्मादाख्यातस्यानुदात्तत्वादर्थासम्भवाच्च द्विपदत्वे, 'वायः'—इत्येतदेकपदमेव, "शकुनिपुत्रः" एव चास्याभिधेयः उपपद्यते॥

"रथर्य्यति (११५)"—इति, अनवगतम्। 'रथं हर्य्यति' —इत्यवगमः, हर्य्यतिशब्दो हि प्रेप्सायाम्, "रथं" हि यः "कामयते" स रथर्य्यति। एष देवो रथर्य्यति पवमानो दशस्यति। आविष्कृणोति वग्वनुम्॥"—इति (ऋ० सं० ६, ७, २०, ५)। शुनःशेपस्यार्षम्। पावमानी सौमी। गायत्री। ग्रावस्तुत आवापे। 'एषः' सोमः 'देवः' 'रथर्य्यति' रंहणमात्मनो गमनमिच्छति। 'पवमानः' 'दशस्यति' दानमात्मन इच्छति, कथं नाम मां देवेभ्यो दद्युरिति। किञ्च, 'आविष्कृणोति' प्रकाशी-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

करोति 'वग्वनुम्' वचो वननीयम्, दत्त मां देवेभ्य इति ॥ एवमत्र "रथर्यति=रथप्रेप्सुः" शब्दसारूप्यादेतदुपपद्यते ॥

"असक्राम् (११६)"—इति, अनवगतम्। "असंक्रमणीम्" —इति शब्दसमाधिः। "पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम्। स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन्॥"—इति (ऋ० सं० ५, १, ४, ३)। भरद्वाजस्यार्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। 'पुरु' बहु 'देष्णं' दानं 'वां' युवाभ्यां यज्ञे यस्मात् हे 'पुरुभुजौ' बहुभोजिनौ! अश्विनौ! तस्मात् युवां ब्रूमः,—'धेनुं नः' तर्पयित्रीमस्मभ्यम् 'इषम्' अन्नलक्षणम् 'पिन्वतम्' प्रक्षारयन्तम् 'असक्राम्' असंक्रमणशीलाम् अनपायिनीम् अस्मत्तः, अथवा असंक्रमणशीलां द्याम्, 'इषम्' इड्हेतूदकमस्मदर्थं प्रक्षारयतमिति स्यात्। किम्पुनः तद् युवयोर्बहुदानम्? इति,—'स्तुतश्च' स्तुतशस्त्रवांश्च सोमो युवयोरन्नम्। हे 'माध्वी' मधुपौ! 'सुष्टुतिश्च' शोभनाभिः स्तुतिभिः सुष्ठु स्तुतः, 'रसाश्च' आज्यादयः, य एते 'राति' पुरोडाशस्यानुगच्छति, सर्व एते युवयोरेव। तस्माद् ब्रवीमि,—पिन्वतमिति ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च 'असक्रम्'—इत्यस्य शब्दस्य "असंक्रमणीम्"—इत्येष विपरिणाम उपपद्यते। इडभिप्रेया, द्यौर्वा ॥ ५ ॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)

पञ्चमः पादः ॥ ६, ५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## षष्ठः पादः ॥

आधव आधवनात्। मतीनां च साधनं विप्राणां चाधवमित्यपि निगमो भवत्यनवब्रवोऽनवक्षिप्तवचनः। विजेषकृदिन्द्र इवानवब्रव इत्यपि निगमो भवति ॥ १ (२६) ॥

"आधवः (११७)"—इति, अनवगतम्। "आधवनात्"—इत्यवगमः, आकम्पनादित्यर्थः। "मंसीमहि त्वा वयमस्माकं देव पूषन्। मतीनां च साधनं विप्राणां चाधवम् ॥"—इति (ऋ० सं० ७, ७, १३, ४)। ऐन्द्रस्य विमदस्यार्षम्। अनुष्टुप्। पौष्णी। 'मंसीमहि' त्वां हे 'पूषन्'! 'देव!' 'मतीनां' च प्रज्ञानामस्माकं साधयितारम्, आदित्येन हि प्राणिनां प्रज्ञा अभिव्यज्यन्ते। किञ्च, ये चान्ये 'विप्राः' प्राप्तप्रज्ञाः मेधाविनः, तेषाम् 'आधवम्' आकम्पयितारं स्वयमेव। तथा त्वमात्मनो गुणवत्तां दर्शयसि, यथा प्रोत्कम्पमानहृदयास्ते त्वां स्तुवते ॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "आधवः=आकम्पयिता" —इत्युपपद्यते ॥

"अनवब्रवः (११८)—इति, अनवगतम्। "अनवक्षिप्तवचनः"—इति अवगमः। "विजेषकृदिन्द्र इवानवब्रवोऽस्माकं मन्यो अधिपा भव। प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥—इति (ऋ० सं० ८, ३, १६, ५)। मन्योरार्षम्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

त्रिष्टुप्। मान्यवे सूक्ते। श्येनादिषु निष्केवल्ये शस्यते। 'विजे- षकृत्' विजयकृत्, 'इन्द्रः इव अनवब्रवः' इन्द्र इवानवक्षिप्तवचनः, न हीन्द्रस्य केनचिदाक्षिप्यते वचः। हे 'मन्यो!' यस्त्वम् अनव- क्षिप्तवचनः इन्द्र इव, स त्वमस्माकम् 'अधिपाः' अधिष्ठाय पाता 'भव'। किञ्च, हे 'सहुरे' शत्रूणां सहनशील! 'प्रियं ते' यत् 'नाम' तेन त्वां 'गृणीमसि' नित्यमेव स्तुम इत्यर्थः। किञ्च 'विद्म' जानीमो वयम् 'तम्' 'उत्सम्' उत्स्यन्दनम्, 'यतः' त्वम् 'आबभूथ'॥ एवमत्र शब्दसारूप्यादर्थाविरोधाच्च "अनवब्रवः = अनवक्षिप्तवचनः"—इत्युपपद्यते ॥ १ (२६) ॥

अरायि काणे विकटे गिरिं गच्छ सदान्वे। शिरि- म्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ अदायिनि काणे विकटे काणोऽविक्रान्तदर्शन इत्यौपमन्यवः कणतेर्वा स्यादणूभावकर्मणः कणतिः शब्दाणूभावे भाष्यतेऽनुकण- तीति मात्राणूभावात्कणो दर्शनाणूभावात्काणो विकटो विक्रान्तगतिरित्यौपमन्यवः कुटतेर्वा स्याद् विपरीतस्य विकुटितो भवति गिरिं गच्छ सदानोनुवे शब्द कारिके। शिरिम्बिठस्य सत्वभिः। शिरिम्बिठो मेघः शीर्यते बिठे बिठमन्तरिक्षं बिठं वीरिटेन व्याख्यातं तस्य सत्त्वै- रुदकैरिति तैस्त्वा चातयामोऽपि वा शिरिम्बिठो भार-

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वाजः कालकर्णोपेतोऽलक्ष्मीर्निर्णाशयाञ्चकार तस्य सत्त्वैः कर्मभिरिति स्यात्तैष्ट्वा चातयामश्चातयतिर्नाशने पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवतीन्द्रोऽपि पराशर उच्यते परा शातयिता यातूनाम्। इन्द्रो यातूनामभवत्पराशर इत्यपि निगमो भवति। क्रिविर्दती विकर्त्तनदन्ती। यत्रा वो दिद्युद्रदति क्रिविर्दतीत्यपि निगमो भवति। करूलती कृत्तदती अपि वा देवं कश्चित् कृत्तदन्तं दृष्ट्वैवमवक्ष्यत् ॥ २ (३०) ॥

"सदान्वे (११६)"—इति, अनवगतम्। "सदानोनुवे"—इति शब्दसमाधिः। "अरायि काणे०—०चातयामसि ॥"—इति (ऋ० सं० ८, ८. १३, १)। शिरिम्बिठस्य भारद्वाजस्य आर्षम्। अनुष्टुप्। दुर्भिक्षाधिदेवतोच्यते, कालकर्णा वा अलक्ष्मीः। हे 'अरायि' "अदायिनि!" दुर्भिक्षाधिदेवते! अथवा हे अलक्ष्मि! दुर्भिक्षेण पीड़ितानां न दाने मतिः प्रभवति, नाप्यलक्ष्म्याभिभूतानाम्। 'काणे' दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषोर्भवति, अन्नाभावात्, अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते, लोकेऽपि च या विरूपा भवति, अलक्ष्मीरिति सोच्यते। 'विकटे' दुर्भिक्षे दुर्बलत्वात् विकटेव प्राणिनां गतिर्भवति, अलक्ष्मीरपि तद्रूपा। 'गिरं गच्छ' मात्रावस्थानं कार्षीः। 'सदान्वे' "सदा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नोनुवे शब्दकारिके" दुर्भिक्षे हि क्षुत्पीड़िताः प्राणिनो निःश्वस-न्तः सदैव शब्दं कुर्वन्ति, अलक्ष्मीरपि तद्रूपा,—पिशाचादीनि नित्यमव्यक्तं शब्दं कुर्वन्ति,--पिशाचाद्या हि शृणु नसुनायन्तस्थेति लोके वक्तारो भवन्ति, एतत् प्रसिद्धम्। 'शिरिम्बिठस्य' मेघस्य स्वभूतैः 'सत्वभिः' "उदकैः" "सत्त्वम्"—इति ह्युदकनामसु पठि-तम्। "अपि वा शिरिम्बिठो भारद्वाजः" "तस्य सत्त्वैः नामभिः" तेन यानि दृष्टानि नामानि, सम्भवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नाशयामः॥ एवमत्र शब्दार्थाविरोधात् "सदान्वे" —इत्यस्य "सदानोनुवे"—इत्येष विपरिणाम उपपद्यते॥

निगमप्रसक्तान्यधुनोच्यन्ते,—"राति, रासति"—इति दान-कर्मसु पठितः, तस्य प्रतिषेधपूर्वस्य 'अरायि'—इति भवति। "कणतिः, शब्दाणूभावे भाष्यते,—अनुकरणतीति" "मात्राण-भावात्" "कणः" श्यामाकादिः, तत्सामान्यात् "दर्शनाणूभावात्" "काणः"। अथवा "काणः= विक्रान्तदर्शनः"— "इत्यौपमन्यवः" विक्रान्तं हि तस्य दर्शनं भवति, एकीभूतत्वात्। "काणः= अविक्रान्तदर्शनः"—इति वा, मन्दचक्षुष्ट्वात्। "विकटः= विक्रा-न्तगतिः" विकृतगतिरित्यर्थः। अथ "वा" "कुटते" धातोः "स्यात्" असौ हि "विकुटितो भवति" कुत्सीभूत इत्यर्थः। "बिठम्"—इत्यपठितमन्तरिक्षनामसु, तत् पुनरेतत् "बीरिटेन व्याख्यातम्" अत्र ह्युक्तम्,—"बीरिटमन्तरिक्षम्, भियो वा भासो वा ततिः"। तस्मिन् "बिठे" यः "शीर्य्यते" सः "शिरि-म्बिठः (१२०) मेघः"। "अपि वा शिरिम्बिठो भारद्वाजः" सो-

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ऽनेन सूक्तेन "अलक्ष्मीः निर्नाशयाञ्चकार"—इति निदानमन्वाख्यातम्। अद्यापि योऽलक्ष्म्याभिभूतो भवति, स आस्यदघ्ने उदकेऽवतीर्य्य सूक्तमेतज्जपति, तस्यालक्ष्मीर्निर्नश्यति ॥

"पराशरः (१२१)"—इति, अनवगतमनेकार्थञ्च। "पराशीर्णः"—इत्यवगमः। "प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥"—इति (ऋ० सं० ५, २, २८, १)। वसिष्ठस्यार्षम्। ऐन्द्रे सूक्ते। त्रिष्टुप्। प्रकर्षेण 'ये' 'अममदुः' तृप्तवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु। हे इन्द्र! 'त्वाया' त्वया सह 'पराशरः' च 'शतयातुः' बहूनां रक्षसां यातयिता, तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते। 'वसिष्ठः' च इत्येवमादयः। किं तेषाम्? इति,—'न' 'ते भोजस्य' भोगिनः तव 'सख्यं सखिभावं' 'तृषन्त' मार्जयन्ते नाशयन्तीत्यर्थः। 'अधा' अथैवङ्गुणयुक्तेभ्यस्तेभ्यः 'सूरिभ्यः' 'सुदिना' शोभनानि दिनानि 'व्युच्छान्' विभान्तीत्यर्थः। तेषामेव सुप्रभाता रात्रयः इत्यभिप्रायः। एवमत्र "ऋषिः=पराशरः" वसिष्ठसम्बन्धात् ॥

"इन्द्रोऽपि पराशर उच्यते" स हि "परा" परितः "शातयिता" "यातूनां" यातयितव्यानाम्, असुरादीनामिति। "इन्द्रो यातूनामभवत् पराशरः ॥"—इति ( ऋ० सं० ५, ७, ६, १ )। व्याख्यातः शेषः ॥

"क्रिविर्दती (१२२)"—इति, अनवगतम्। "विकर्त्तनदन्ती"—इत्यवगमः। "यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

नोनुवे शब्दकारिके" दुर्भिक्षे हि क्षुत्पीड़िताः प्राणिनो निःश्वसन्तः सदैव शब्दं कुर्वन्ति, अलक्ष्मीरपि तद्रूपा,—पिशाचादीनि नित्यमव्यक्तं शब्दं कुर्वन्ति,—पिशाचाद्या हि शृणु नसुनायन्तस्थेति लोके वक्तारो भवन्ति, एतत् प्रसिद्धम्। 'शिरिम्बिठस्य' मेघस्य स्वभूतैः 'सत्वभिः' "उदकैः" "सत्त्वम्"—इति ह्युदकनामसु पठितम्। "अपि वा शिरिम्बिठो भारद्वाजः" "तस्य सत्त्वैः नामभिः" तेन यानि दृष्टानि नामानि, सम्भवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नाशयामः॥ एवमत्र शब्दार्थाविरोधात् "सदान्वे" —इत्यस्य "सदानोनुवे"—इत्येष विपरिणाम उपपद्यते॥

निगमप्रसक्तान्यधुनोच्यन्ते,—"राति, रासति"—इति दानकर्मसु पठितः, तस्य प्रतिषेधपूर्वस्य 'अरायि'—इति भवति। "कणतिः, शब्दाणूभावे भाष्यते,—अनुकरणतीति" "मात्राणभावात्" "कणः" श्यामाकादिः, तत्सामान्यात् "दर्शनाणूभावात्" "काणः"। अथवा "काणः = विक्रान्तदर्शनः"—"इत्यौपमन्यवः" विक्रान्तं हि तस्य दर्शनं भवति, एकीभूतत्वात्। "काणः = अविक्रान्तदर्शनः"—इति वा, मन्दचक्षुष्ट्वात्। "विकटः = विक्रान्तगतिः" विकृतगतिरित्यर्थः। अथ "वा" "कुटते" धातोः "स्यात्" असौ हि "विकुटितो भवति" कुत्सीभूत इत्यर्थः। "विठम्"—इत्यपठितमन्तरिक्षनामसु, तत् पुनरेतत् "बीरिटेन व्याख्यातम्" अत्र ह्युक्तम्,—"बीरिटमन्तरिक्षम्, भियो वा भासो वा ततिः"। तस्मिन् "विठे" यः "शीर्य्यते" सः "शिरिम्बिठः (१२०) मेघः"। "अपि वा शिरिम्बिठो भारद्वाजः" सो-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ऽनेन सूक्तेन "अलक्ष्मीः निर्णाशयाञ्चकार"—इति निदानमन्वाख्यातम्। अद्यापि योऽलक्ष्म्याभिभूतो भवति, स आस्यदघ्ने उदकेऽवतीर्य्य सूक्तमेतज्जपति, तस्यालक्ष्मीर्निर्नश्यति ॥

"पराशरः (१२१)"—इति, अनवगतमनेकार्थश्च। "पराशीर्णः" —इत्यवगमः। "प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥"—इति (ऋ० सं० ५, २, २८, १)। वसिष्ठस्यार्षम्। ऐन्द्रे सूक्ते। त्रिष्टुप्। प्रकर्षेण 'ये' 'अममदुः' तृप्तवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु। हे इन्द्र! 'त्वाया' त्वया सह 'पराशरः' च 'शतयातुः' बहूनां रक्षसां यातयिता, तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते। 'वसिष्ठः' च इत्येवमादयः। किं तेषाम्? इति,—'न' 'ते भोजस्य' भोगिनः तव 'सख्यं सखिभावं 'तृषन्त' मार्जयन्ते नाशयन्तीत्यर्थः। 'अधा' अथैवङ्गुणयुक्तेभ्यस्तेभ्यः 'सूरिभ्यः' 'सुदिना' शोभनानि दिनानि 'व्युच्छान्' विभान्तीत्यर्थः। तेषामेव सुप्रभाता रात्रयः इत्यभिप्रायः। एवमत्र "ऋषिः =पराशरः" वसिष्ठसम्बन्धात् ॥

"इन्द्रोऽपि पराशर उच्यते" स हि "परा" परितः "शातयिता" "यातूनां" यातयितव्यानाम्, असुरादीनामिति। "इन्द्रो यातूनामभवत् पराशरः ॥"—इति (ऋ० सं० ५, ७, ६, १)। व्याख्यातः शेषः ॥

"क्रिविर्दती (१२२)"—इति, अनवगतम्। "विकर्त्तनदन्ती" —इत्यवगमः। "यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पिपर्त्तन। यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव वर्हणा ॥"--इति ( ऋ० सं० २, ४, २, १)। अगस्त्यस्यार्षम्। जगती। हे 'मरुतः! 'उग्राः' 'उद्गूर्णाः, 'अरिष्टग्रामाः' अनुपहिंसितसङ्घाताः यूयम्, अस्माकं 'सुचेतुना' शोभनेन प्रज्ञानेन, एतां 'सुमतिं' शोभनां मतिम 'पिपर्त्तन' पूरयत पालयत वा। केन पुनः पूरयत ? कुतो वा पूरयत ? इति--"यत्रा वो दिद्युत्"। 'यत्र' यस्मिन् मेघे 'दिद्युत्' आयुधं क्षिप्तं युष्माभिः, तमेव मेघं 'रदति' विलिखति, विदारयति वर्षार्थम्। किंलक्षणा पुनर्दिद्युत्? इति,--'क्रिविर्दती' विकर्त्तनसमर्थैः दन्तैः या रदति। कथम्पुनर्या रदति ? "रिणाति पश्वः सुधितेव" इति। यथा 'पश्वः' पशोः अङ्गानि 'रिणाति' पृथक् करोति, 'सुधिता' स्वधित्या, 'वर्हणा' परिवृद्धया हिंसया, एवमस्मिन् मेघे दिद्युतः ता रदन्ति। ततः प्रभ्रष्टेनोदकेन सुमतिमस्माकं पिपर्त्तन॥ एवमत्रार्थाविरोधादायुधं 'क्रिविर्दती' शब्देनोच्यत इत्युपपद्यते॥

"करूलती (१२३)"--इति, अनवगतम्। "कृत्तदती"—इत्यवगमः॥ २ (३०)॥

वामं वामं त आदुरे देवो ददात्वर्य्यमा। वामं पूषा वामं भगो वामं देवः करूलती॥ वामं वननीयं भवत्यादुरिरादरणात्तत्कः करूलती भगः पुरस्तात्तस्यान्वादेश इत्येकं पूषेत्यपरं सोऽदन्तकोऽदन्तकः पूषेति च

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्राह्मणम्। दूनो विश इन्द्र मृध्रवाचः दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु। अवीरामिव मामयं शरारु रभिमन्यते। अबलामिव मामयं बालोऽभिमन्यते संशिशरिषुरिदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते। वसूयुरिन्द्रो वसुमानित्यत्रार्थः। अश्वयुर्गव्यूरथयुर्वसूयुरित्यपि निगमो भवति ॥ ३ (३१) ॥

"वामं वामं त०—०देवः करूलती ॥"—इति (ऋ० सं ३, ६, २३, ४)। वामदेवस्यार्षम्। ऐन्द्रे सूक्ते। अनुष्टुप्। रात्रिपर्य्याये प्रशास्तुः शस्त्रे विनियुक्ता। 'वामं वामम्'—इति भूयस्त्वार्थोऽभ्यासः, "अभ्यासः, "अभ्यासे भूयांसमर्थं मन्यन्ते"—इति हि वक्ष्यति। यद्यत् सुष्ठु "वननीयम्" इष्टम्, 'ते' तव धनम्, तत्तत् हे 'आदुरे' आदरवन्! यजमान! स हि यागं प्रति नित्यम् आदृतो भवतीत्यत एवं सम्बोध्यते—हे आदुरे!। 'वामं ददात्वर्य्यमा'। यदर्य्यम्णो 'वामं"वननीयम्" इष्टम्, आत्मनो धनम्, तत् असौ तुभ्यं 'ददातु'। किञ्च, 'वामं पूषा' ददातु। 'वामं भगः' ददातु। 'वामं देवः करूलती' ददात्वित्येतदेवानुवर्त्तते। 'करूलती'—इत्येतद् गुणपदत्वात् सन्दिह्यते, "तत्" एतत् विचार्य्यते—"कः करूलती?"—इति। "भगः पुरस्तात्" 'करूलती'शब्दस्य। "तस्य" एवायम् "अन्वादेशः" सन्निधान-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सामर्थ्यात्।—"इत्येकम्" आचार्य्यमतम्। "पूषा—इति अपरम्"। किङ्कारणम्? "सः" हि पूषा "अदन्तकः"। आह,—कुत एतत् इति, उच्यते,—"अदन्तकः पूषा—इति च ब्राह्मणम्"। प्राशित्रभागब्राह्मणे हि श्रूयते,—"तत् पूष्णे पर्य्याजहुः, तत् पूषा प्राश्नात्, तस्य दतो निर्जघान, तस्मादाहुः,—अदन्तकः पूषा"—इति। यत् पुनरेतदुक्तं सन्निधिसामर्थ्यात् भगः करूलती स्यादिति। अकारणमेतत्,—"यस्य येनार्थसम्बन्धो दूरस्थमपि तस्य तत्। अर्थतो ह्यसमर्थानामानन्तर्य्यमकारणम्"—इति न्यायविदः पठन्ति॥ तस्मात् पूषैव 'करूलती'—इत्युच्यते, शब्दसारूप्यादर्थोपपत्तेश्चेति॥

"दनः (१२४)—इति अनवगतम्। "दानमनसः—इत्यवगमः। "दनो विश इन्द्र मृध्रवाचः सप्त यत् पुरः शर्म शारदीर्दर्त्। ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः॥"—इति (ऋ० सं० २, ४, ६, २)। अगस्त्यस्यार्षम्। हे 'इन्द्र!' 'दनः' "दानमनसः" एव एतान् अस्मभ्यं 'विशः' "मनुष्यान्" "कुरु" 'मृध्रवाचः' "मृदुवाचः"। कस्मात् पुनरेवमुच्यते? इतः,—'यत्' यस्मात् त्वम् 'सप्त' सृप्ताः, 'पुरः' मेघपुरः, 'शारदीः' शरत्कालोत्थाः संवत्सरोत्था वा, संवत्सरोऽपि हि शरदित्युच्यते,—"स जीव शरदः शतम्"-इति लिङ्गात्। 'शर्म' सुखमिच्छन् जनानां 'दर्त्' दारयसि। किञ्च, 'अनवद्यार्णाः' अनवद्योदकाः, ताः पुरः 'ऋणोः' अपगमितवानसि इमं लोकं प्रति 'अपः'। स्वभाव एवैष तव लोकाननुगृहीतुमित्यभिप्रायः। किञ्च, "यूने वृत्रम्"। यौतिः स्तुत्यर्थः।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

स्तोत्रे यजमानाय 'पुरुकुत्साय' बहुस्तुतिकर्त्रे 'वृत्रं' धनं 'रन्धीः' सम्पादितवानसीत्यर्थः। यत एवमुपकारे प्रवृत्तो भवान् स्तोतृणामेषाञ्च जनानाम्, तस्मात् ब्रूमोऽस्माकमपि एतान् मृदुवाचः कुरु मनुष्यानिति ॥ एवमत्र 'दनः'—इत्यस्मिन् पदे दकारे "दानमनसः" —इति एतान्यक्षराण्यध्याहृतानि भाष्यकारेण, 'न'कारश्चास्मद्योगे विभज्योदाहृतः, तथार्थोपपत्तिदर्शनात्। "कुरु"—इत्येतच्चार्थपरिसमाप्त्यर्थमध्याहृतम्। उत्तरास्त्रयः पादा हेतुभावेन, 'सप्त यत् पुरः'—इत्येतस्मात् सर्वनामसम्बन्धात् ॥

"शरारुः (१२५)"—इति, अनवगतम्। "संशिशरिषुः"—इत्यवगमः। "अवीरामिव मामयं शरारुरभिमन्यते। उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥"—इति (ऋ० सं० ८, ४, २, ४)। पङ्क्तिः। ऐन्द्री। इन्द्रपत्नी एवं ब्रवीति—'अवीरामिव' "अबलामिव" अपरिग्रहामिव। 'माम् अयं' 'शरारुः' "बालः" मूर्खः "संशिशरिषुः" संशत्तुमिच्छन् शरीरं तित्यक्षुरित्यर्थः। 'अभिमन्यते' अभिभविष्याम्येतामित्येव मन्यते, क्षुद्रया बुद्ध्या। नहुषोऽन्यो वा कश्चित्, "नहुषेण हीन्द्राण्यभिभवितुमारब्धासीत्" - इत्याख्यानं श्रूयते। "उताहमस्मि वीरिणी" अथ च तावदस्मि वीरिण्येव। केन च पुनर्वीरेण वीरिणी। 'इन्द्रपत्नी' इन्द्रस्याहं पत्नी,—मरुत्सखा' यः 'इन्द्रः' ? 'विश्वस्मात्' सर्वस्माद् यश्च 'उत्तरः' 'जगतः' उद्यततरः प्रभावेण, स मे वीरः, तदयं बालो न मन्यते, तेन मामभिभवितुमिच्छतीत्यभि प्रायः ॥ एवमत्र "शरारुः=संशिशरिषुः" शब्दसारूप्यादर्थोपपत्तेश्च ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"इदंयुः (१२६)"—इति, अनवगतमनेकार्थञ्च। इदमिति यत् किञ्चिदभिप्रेतं निर्दिश्यते, तद्यः कामयते, स इदंयुरित्युच्यते। 'युः'—इत्येषः शब्दोऽप्रसिद्धः कामयतेऽर्थे, तेनानवगतमेतत स्यात्। "नानाधियो वसूयवः"—इत्यनेन गतार्थं मन्यमानो भाष्यकारो निगमं न ब्रवीति। वार्त्तिककारेणाप्युक्तम्,—"निगमवशादुत्कर्ष्यं भवति पदम्" तद्धितः, तथा धातुः, उपसर्गगुणः, निपाताश्च मन्त्रगताः सर्वथा लक्ष्याः॥

"अथापि" 'युः'—इत्येषः, "तद्वदर्थे भाष्यते"। आह,—किमुदाहरणम्? "वसूयुरिन्द्रः"—इति, वसुमानित्यर्थः। "इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः। अश्वयुर्गव्यूरथयुर्वसूयुरिन्द्र इन्द्रायः क्षयति प्रयन्ता॥"—इति (ऋ० सं० १, ४, ११, ४)। सख्यत्वमापन्नस्येन्द्रस्येयमार्षम्। ऐन्द्री। त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। यः 'इन्द्र' 'अश्रायि' श्रृणाति, हिनस्तीत्यर्थः। 'शुद्धः' शुद्धविक्रमः, अजिह्मयोधी, अथवा शोधयिता योधानां प्रहारैः, सुधीर्वा स्यात्। क्व पुनः श्रृणाति? 'निरेके' संग्रामे यत्रैकोऽप्यन्यः सहायो नास्ति, तत्र एक एव शत्रून् हन्ति। 'पज्रेषु' प्रार्जितायुधेष्वपि पदेषु संग्रामेषु। किञ्च, 'स्तोमो न' स्तोम इव। यः प्रधानः त्रिवृत् स्तोमः, पञ्चदश इति हि व्यपदेशः, सोमे प्रभवति स्तोमेन तस्य प्राधान्यात्। किञ्च, यः इन्द्रः 'दुर्यो न' दुर्ये इव 'यूपः' यः प्रधानः। तस्य किम्? इति,—स इन्द्रः 'अश्वयुः' अश्वैस्तद्वान्। 'गव्युः गोभिः तद्वान्। 'वसूयुः' अन्नैर्वसुभिः तद्वान्। एवङ्गु-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

णविशिष्टः 'यः इन्द्रः' सः 'रायेषु' धनेषु जनानां दातव्येषु 'क्षयति' इष्टे। 'प्रयन्ता' प्रकर्षेण दात्येर्थः॥ एवमत्र 'वसूयुः'—इत्ययं युशब्दः "तद्वदर्थे"। किङ्कारणम्? न हीन्द्रो वसु कामयते, सुपूर्णत्वात्, परिशेषात् अयं "तद्वदर्थे भाष्यते"—इत्युपपद्यते ॥ ३ (३१)॥

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः। किं ते कुर्वन्ति कीकटेषु गावः कीकटा नाम देशोऽनार्य्यनिवासः कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा नैव चाशिरं दुह्रे न तपन्त घर्मं हर्म्यमाहर नः प्रमगन्दस्य धनानि मगन्दः कुसीदी माङ्गदो मामागमिष्यतीति च ददादि तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुःपण्डको वा पण्डकः पण्डगः प्रार्दको वा प्रार्दयत्याण्डावाण्डावाणी इव व्रीडयति तस्तम्भे नैचाशाखं नीचाशाखो नीचैःशाखः शाखाः शक्नोतेराणिररणात्तन्नो मघवन्रन्धयेति रध्यतिर्वशगमने बुन्द इषुर्भवति बुन्दो वा भिन्दो वा भयदो वा भासमानो द्रवतीति वा ॥ ४ (३२)॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

"कीकटेषु (१२७)"—इति, अनवगतम्। "किङ्कृताः"—इति शब्दसमाधिः, "किं क्रियाभिः—इति" "वा"। "किं ते कृण्वन्ति०—०नृन्धया नः॥"—इति (ऋ० सं० ३, ३, २१, ४)। विश्वामित्रस्यार्षम्। ऐन्द्री। त्रिष्टुप्। इन्द्र! याः 'कीकटेषु' अनार्य्यदेशनिवासिषु मनुष्येषु 'गावः' ताः 'ते' तव 'किम्' कमुपकारं कुर्वन्ति? न कञ्चिदपीत्यभिप्रायः। "नाशिरं दुह्रे, न तपन्ति घर्मम्" नाप्याशिरार्थं दुह्यन्ते, नापि घर्मे तप्यमानेऽङ्गभावं गच्छन्ति, नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियास्वित्यभिप्रायः। यत एवमतो ब्रूमः,—"आ हर नः" ताः गाः, वयं 'तव' ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः। किञ्च, यदप्येतत् 'प्रमगन्दस्य' वृद्धिजीविनो धनम्, एतच्च तथा अस्मभ्यमाहर, तदपि न क्रियासु "ततस्थं" विनियुज्यते, वयं तद् विनियोक्ष्याम इत्यभिप्रायः। "प्रमदको वा" नित्यप्रमुदितो विषयपरः प्रमगन्दः स्यात्। "पण्डको वा" नपुंसकः प्रमगन्दः स्यात्। तयोर्वा धनानि क्रियासु न विनियुज्यन्ते, शब्दसारूप्यञ्च प्रमगन्दशब्दे उभयोरस्ति, तस्मात् तावप्युपपद्येते। "नैचाशाखं मघवन्नृन्धया नः"। यदेतेषामन्यतमस्य नीचशाखाप्रसूतस्य नीचवंशप्रसूतस्य दीनतुल्यस्य धनम्, तत्। हे 'मघवन्!' शीघ्रं 'रन्धय' संसाध्य अस्मद्वशं कुर्वित्यर्थः॥

एवमत्र 'कीकटाः' "किं कृताः" किं ते कृताः? इत्येवमभिव्याहारमर्हन्ति, न तैः कश्चिदर्थोऽस्ति, न ते देवपितृमनुष्याणामुपकारं कुर्वन्तीत्यर्थः। अथ "वा" किं क्रियाभिः?"—"इति"

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं "प्रेप्साः" ते नास्तिका एवमभिप्राया इत्यर्थः। एतस्माच्छब्द-सारूप्यादर्थोपपत्तेश्च "कीकटाः=अनार्य्यदेशनिवासिनः"—इत्युपपद्यते॥

"मगन्दः=कुसीदी"—इत्युच्यते, स हि "माम्"—इयात् अद्यतनोऽर्थः, अयञ्च "आगमिष्यति"—इत्येवमनुचिन्त्य, परेभ्यो धनानि "ददाति"। "तदपत्यं प्रमगन्दः, अत्यन्तकुसीदिकुलीनः" तद्धितार्थे प्रः, प्रमगन्दः, 'प्रस्कण्वस्य'—इति यथा। "प्रमदकः" प्रमादशीलः,—"अयमेवैको लोकोऽस्ति, न परः"—"इति" एवं "प्रेप्सुः" नास्तिकः। "पण्डकः"। तृतीया प्रकृतिः, स हि "पण्डगः" पण्डं गच्छति, स्त्रीरूपत्वात्। "प्रार्दकः"—इति "वा" स्यात्, "प्र" प्रकर्षेण ह्यसौ "अर्दयति" अज्ञानैः सह स्त्रीत्वेन गच्छति "आण्डौ" कस्मात् तौ "आण्डौ"? "आणी इव व्रीड-यति" तौ ह्यसौ पण्डको मुखे पुनर्मैथुने कर्मणि वर्द्धमानः "आणी इव व्रीड़यति" सम्भ्रमतीत्यर्थः॥

बुन्दः (१२८)"—इति, अनवगतम्। "इषुर्भवति"—इत्यभि-धेयवचनम्। "भिन्दो वा भयदो वा भासमानो द्रवतीति वा" —इति शब्दसमाधयः॥ ३ (३२)॥

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः॥ उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा॥ तुविक्षं-बहुविक्षेपं महाविक्षेप वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्यय उभौ ते बाहू रण्यौ रमणीयौ

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सांग्राम्यौ वर्दुपे अर्दनपातिनौ गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा मर्मण्यर्दनवेधिनौ गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ वा ॥ ५ (३३) ॥

"तुविक्षं ते०—०दूदूवृधा ॥"—इति (ऋ० सं० ५, ६, ३०, १)।
"निराविध्य०—०स्वाततम् ॥"—इति (ऋ० सं० ६, ५, ३०, १)।
च कुरुस्तुतेरार्षमेतदृग्द्वयम्। ऐन्द्री। सतो बृहती पूर्वा, गायत्र्युत्तरा। हे इन्द्र! 'तुविक्षं' "बहुविक्षेपम्" बहूनां विक्षेपाणां 'सुकृतं' शोभनानि हि येन कर्माणि क्रियन्ते तम्, अथवा शोभनं कृतम्, 'सूमयं' च सुखकरं सुहृदाम्। किम्पुनस्तत्? 'धनुः'। किञ्च, "साधुर्बुन्दो हिरण्ययः" 'साधयिता' स्तोमानां शत्रुसङ्घातानां वा 'बुन्दः' इषुः "हिरण्ययः" हिरण्यविकृत इत्यर्थः। किञ्च, 'उभा ते बाहू' उभावपि ते बाहू, 'रण्या' "रमणीयौ" स्वायतौ पीनौ च, अथवा "सांग्राम्यौ" रणयोग्यौ, 'सुसंस्कृतौ' समलङ्कृतौ 'ऋदूपे' "अर्दनपातिनौ" अर्दनेन हि गमनेन क्षेपणेन तौ शत्रून् पातयतः। 'ऋदूवृधा' ऋद्धिति मर्मोच्यते, तत्र यौ विध्येते तौ ऋदूवृधौ मर्मवेधिनावित्यर्थः। भाष्यमत्र न सम्यगिव लक्ष्यते, तस्य सम्यक् पाठोऽन्वेष्यः, ततो योज्यम्। एवमत्र धनुःसम्बन्धात् "बुन्द = इषुः" ॥ ५ (३३) ॥

निराविध्यद्गिरिभ्य आधारयत्पक्वमोदनम्। इन्द्रो बुन्दं स्वाततम् ॥ निरविध्यद्गिरिभ्य आधारयत्पक्वमोदनमुदकदानं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मेघम् । इन्द्रो बुन्दं स्वातं वृन्दं बुन्देन व्याख्यातं वृन्दारकश्च ॥ ६ (३४) ॥

"निराविध्य०—०स्वाततम् ॥" इति (ऋ० सं० ६, ५, ३०, १) । 'पक्वम्' बहूनां मेघानां मध्ये यः पक्वो मेघः, उदकदाने समर्थः, तम्, 'इन्द्रः' 'निरविध्यत्' । विद्ध्वा च तावत् 'आधारयत्' यावन्निरुदकः संवर्त्त इति । कथं निरविध्यत्? इति,— बुन्दं 'स्वाततम्' स्वाकृष्टमाकर्णीकृत्वा ॥ एवमत्राकर्षणसम्बन्धात् "इषुः =बुन्दः"—इत्युपपद्यते ॥

"वृन्दम् (१२६)"—इति, एतत् पदम् "बुन्देन" एव "व्याख्यातम्" अस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दे ॥

"वृन्दारकश्च" 'बुन्देन' एव "व्याख्यातः" । हस्ती वृन्दारकः प्रकरणवशाद्वान्यः कश्चित् ॥६ (३४) ॥

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः । अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥ अयं यो होता कर्त्ता स यमस्य कमप्यन्नमभिवहति यत्समश्नुवन्ति देवा अहरहर्जायते मासे मासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाहमुल्बमूर्णोतेर्वृणोतेर्वा । महत्तदुल्बं स्थविरं तदासीदित्यपि निगमो भवत्यृ-


CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वीसमपगतभासमपहृतभासमन्तर्हितभासं गतभासं वा ॥ ७ (३५) ॥

"किः (१३०)"—इति, अनवगतम्। "कर्त्ता"—इत्यवगमः। "अयं यो होता०—०हव्यवाहम् ॥"—इति (ऋ० सं० ८, १, १२, ३)। ऋचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्, तत्रेयं विश्वेदेवानामार्षम्। आग्नेय्यौ। 'यः अयम्' अग्निः, 'होता' आह्वाता देवानां पृथिवीस्थानः। किं तस्य? इति—'किः उ सः' 'यमस्य' भगवत आदित्यस्य, अग्नेर्हि सकाशात् प्रातरादित्यः प्रसूयते। तदुक्तम्,—"एष प्रातः प्रसुवति, तस्मात् प्रातर्वोपतिष्ठन्त इति। "यस्मिन् वृक्षे सु पलाशे (ऋ० सं० ८, ७, २३, १)"—इत्यस्यामृचि यमत्वमादित्यस्य वक्ष्यति। किञ्च, 'कम् अपि ऊहे' "कमप्यन्नम् अभिवहति"। "कम्"—इत्यन्ननाम, अन्नमपि चायमेवाभिवहति। कतमत्? 'यत्' एतत् हविर्लक्षणं 'समञ्जन्ति' "समश्नुवन्ति" 'देवाः'। अञ्जतिरत्र प्रकरणवशाद् भोजनार्थः। किञ्च, अयमेव 'अहरहः' अहन्यहनि अग्निहोत्रिणां गृहेषु उद्बोध्यमानो महान् 'जायते'। 'मासि मासि' जायते पितृयज्ञेषु, "अर्द्धमासेऽर्द्धमासे" च दर्शपूर्णमासेषु च। यस्मादेवङ्गुणविशिष्टोऽयमग्निः, 'अथ' एतस्मात् कारणात् एतमग्निं सर्वे 'देवाः' 'दधिरे' "निदधिरे" 'हव्यवाहम्' हविषां वोढारमित्यर्थः। एवमत्र शब्दसारूप्यात् 'यमस्य'—इत्येतस्माच्च षष्ठीयोगात् 'किः'—इत्यस्य "कर्त्ता"—इत्येष विपरिणाम उपपद्यते ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"उल्बम् (१३१)"—इति, अनवगतम् । 'जरायु'—इत्यवगमः । "ऊर्णोतेः"—इति धातुनिर्देशः । 'ऊर्णम्'—इति स्यात् । "वृणोतेर्वा" स्यात्, तेन हि गर्भ आवृतो भवति । "महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः । विश्वा अपश्यद् बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥"—इति (ऋ० सं० ८, १, १०, १) । 'महत्' परिमाणतः, 'तत्' 'उल्बं' जरायु 'आसीत्' 'स्थविरं' चिरन्तनञ्च तदासीत् । येन त्वम् 'आवेष्टितः' आवृतः, हे भगवन्! अग्ने! 'प्रविवेशिथ' प्रविष्टवानसि 'पूर्वम्' आदिसर्गे 'अपः' । किञ्च, 'विश्वाः' सर्वा 'तन्वः' तव, हे 'जातवेदः!' 'बहुधा' अनेकेषु अभिधानेषु वर्त्तमानाः 'अपश्यत्' 'एकः देवः' प्रजापतिः, कोऽन्यस्ततः तव तनूनामन्तं वेत्तुमर्हतीत्यभिप्रायः ॥ एवमत्र 'जरायु' 'उल्ब' शब्देनोच्यते, आवेष्टनसम्बन्धादित्युपपद्यते ॥

"ऋबीसम् (१३२)"—इति अनवगतम् । "अपगतभासम्"—इत्येवमाद्याः शब्दसमाधयः । 'पृथिवी'—अभिधेया, सा हि कृष्णच्छाया । तस्मादपगतभासमित्येवमाद्याः शब्दसमाधय उपपद्यन्ते ॥ ७ (३५) ॥

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् । ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंसमहरवारयेथा—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मन्नवतीं चास्मा ऊर्जमधत्तमग्नये योऽयमृब्रीसे पृथिव्यामग्निरन्तरोषधिवनस्पतिष्वप्सु तमुन्निन्यथुः सर्वगणं सर्वनामानं गणो गणनाद्गुणश्च यद्वृष्ट ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैतौ स्तौति स्तौति ॥ ८ (३६) ॥

इति षष्ठाध्यायस्य षष्ठः पादः ॥ ६, ६ ॥

"हिमेनाग्निं०—०सर्वगणं स्वस्ति ॥"—इति (ऋ० सं० १, ८, ६, ३)। कक्षीवत आर्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। हे अश्विनौ! 'हिमेन' "उदकेन" अतिप्रवृद्धं ग्रीष्मान्ते" 'अग्निम्' 'घ्रंसम्' "अहः"लक्षणम्, इमान् लोकान् दिधक्षन्तमिव, युवाम् 'अवारयेथाम्'। वारयित्वा च 'पितुमतीम्, "अन्नवतीम्" पुरोडाशाद्यन्नसहिताम् 'ऊर्जम्, आज्यलक्षणम्, युवाम् 'अधत्तम्' 'अस्मै' अग्नये हविर्भाजे, वर्षानुग्रहपूर्विकया ओषधिनिष्पत्त्या। किञ्च, "ऋबीसे अत्रिमश्विनावनीतम्" युवामेव हे 'अश्विनौ!' "योऽयम्" 'ऋबीसे' "पृथिव्याम्" अग्निरनुप्रविष्टोऽन्तः, येनेमानि पृथिवीगर्भेषु उपनिहितानि तिन्दुकादीनि पच्यन्ते, यमवेक्ष्योक्तम्,—"ऋबीसपक्वं नाश्नीयात्" इति। 'तम् उत् निन्यथुः' युवाम्, ओषध्याद्यन्तर्वर्त्तिनमोषध्यादिरूपेणैव। 'सर्वगणं' "सर्वनामानम्" अग्निरेव ह्ययमनेनौषध्यादिरूपेणावस्थितः, सर्वैर्नामभिः अभिधीयते, अग्नेः सर्वोत्पत्तिदर्शनात्। कस्पुनरर्थं

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

पुरोधाय् उन्निन्यथुः ? इति,—'स्वस्ति' स्वस्त्ययनायास्य जगतः, ओषध्याद्यभावेन हि सर्वमेव जगदभङ्क्ष्यत ॥ एवमत्र 'ऋबीस'-शब्देन "पृथिवी"—इत्युच्यते ॥

"गणः, गणनात्" स हि गण्यते बहुसंयोगात् "गुणश्च" गुणोऽपि गणनादेव, असावपि हि गण्यत एव,—द्विगुणः, त्रिगुण इति। निगमप्रसक्तमेतदुक्तम् ॥

अधुनास्य मन्त्रस्य भाष्यकारः समस्तार्थमाह,—"यद् वृष्ट ओषधयः उद्यन्ति प्राणिनश्च पृथिव्याम् तदश्विनो रूपम्" सोऽश्वि-नोरधिकारः, तदश्विनोर्माहाभाग्यम्। "तेन" माहाभाग्यलक्षणेन रूपेण "एतौ" अश्विनौ मन्त्रदृक् "स्तौति" ॥८ (३६) ॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)

षष्ठः पादः ॥ ६, ६ ॥

इति श्रीजम्बूमार्गाश्रमवासिनः आचार्य्यभगवद्दुर्गस्य कृतौ

ऋज्वर्थायां निरुक्तवृत्तौ

एकादशोऽध्यायः (षष्ठोऽध्यायः) समाप्तः ॥ ६ ॥

१ २ ३ ४ ५ ६ ७

(त्वमग्ने ऽलातृणउद्वृहाऽऽजासउपलप्रक्षिणीकारुरहम-

८ ९ १० ११ १२ १३ १४

स्मेतेश्रायन्तइन्द्राश्ववंहिसोमानमिन्द्रासोमाकृणुष्वतांअध्वरेऽ-

१५ १६ १७ १८ १९ २० २१

स्तिहिवोऽस्तेंप्रवोच्छासृप्रस्तुञ्जेतुञ्जेयोअस्माअस्माइदुतन्न-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

२२ २३ २४ २५ २६ २७ २८

स्तुरीपंहिनोतामत्रोमात्वानपापासोयवं वृकेणजीवान्नोबतो

२९ ३० ३१ ३२ ३३ ३४ ३५

धेनुं नोऽरायिकाणेवामंवामंकिन्तेतुविक्षन्तेनिराविध्यदवंयो-

३६

हिमेनाग्निं षट्त्रिंशत् ॥)

इति निरुक्ते पूर्वषट्के षष्ठोऽध्यायः ॥ ६ ॥

यावन्तो मन्त्राः सर्वशाखासु, तेषु यानि, गुणपदानि लक्षणोद्देशतः, तानि सर्वाण्येव व्याख्यातानि ॥

(नैगमं काण्डं समाप्तम्)

इति नैरुक्तपूर्वार्द्धः समाप्तः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

